वर्तेतेति स लोकनायकनयं विघ्नौघविध्वंसनैः
शंसन्नः सुषमाविभूषिततनुः पायाद्गणाधीश्वरः ॥

## गणपतिवेदपादस्तवः

विष्णु रुवाच –

श्रीमद्गजश्रेष्ठमुखागजात्मज प्रसीद पित्र्यं भगवन्भवद्गणम् ।
तुभ्यं नमः पूरय मन्मनोरथान्गणानां त्वा गणपतिं हवामहे ॥ १ ॥
शुभानां त्वा निधिमीशात्मजाक्षयं जनानां त्वा सर्वदाभीष्टसिद्धिदम् ।
गणानां त्वा गजवक्त्रकरं शुभं गणानां त्वा गणपतिं हवामहे ॥ २ ॥
कौतूहलं मे भवदीशपुत्र त्वां द्रष्टुमिष्टार्थद विघ्नराज ।
बालांशुमालीव निजांशुपुष्टे स्वयं यजस्व पृथिवीमुत द्याम् ॥ ३ ॥
प्रादुर्भव गणेश त्वत्पादभक्तिमतो मम ।
नमस्तुभ्यं प्रपन्नात्मन् रयिं वीरवतो यथा ॥ ४ ॥
तं गणाधिपतिं वन्दे दातुं सर्वमनोरथान् ।
जागर्ति यः स्वभक्तानां वसुवित्पुष्टिवर्धनः ॥ ५ ॥
प्रसीद श्रीफलैः पद्मैः शोभाभद्र विनायक ।
पालाशकुसुमैश्च त्वां हुवे चित्राय राधसे ॥ ६ ॥
त्वद्भक्तानां गणाधीश नमस्तुभ्यं शिवात्मज ।
त्वामाहुः सुहृदं सन्तः सुवीरं सुरथं रयिम् ॥ ७ ॥
विद्रुमाभं गणेश त्वां रत्नसिंहासनस्थितम् ।
स्तौमि वरोन्मुखं नित्यं प्रियमेधमुपस्तुतम् ॥ ८ ॥
येन संहरसि ब्रह्मंस्त्वद्भक्तार्तिं गणेश्वर ।
स तु सुकृतिनां पाता दीर्घस्ते अस्त्वङ्कुशः ॥ ९ ॥
सर्वकामास्तु ये सद्भिर्विनायकविचक्षणैः ।
भोगादिभिः सदा सम्पन्मदाय परिषिच्यसे ॥ १० ॥

प्रसन्नमिव बालार्कं प्रियं चास्तार्कमुत्तमम्।
नमो गणपते तुभ्यं रयिं सहस्रवर्चसम्॥ ११॥

नमस्ते स भवेद्विद्वानाकारः सर्वसुहृदाम्।
यस्त्वां गणपते ध्यायेदन्तःशुभ्रावता पथा॥ १२॥

स्मरामि चेद्गणेश त्वां निर्यान्तीन्द्रियदुर्जनाः।
प्रसीद कृपया वेगादेते वाता इवोरवः॥ १३॥

बभूवुः किल विघ्नेश त्वामाराध्य कृतश्रियः।
नमस्ते बहवस्तात पुरा वयं च सूरयः॥ १४॥

स्कन्दाग्रजादौ शुभकर्मणां कः पूज्यस्त्वदन्यः सकलामराणाम्।
तुभ्यं नमस्तेऽखिलविघ्नशत्रो अस्य विश्वस्य भुवनस्य राजा॥ १५॥

त्वं क्रीडसे यथा देव्या गणेशाङ्कनिषण्णया।
पाहि नः सततं साकं तया वर्द्धस्व सुष्टुतः॥ १६॥

त्वमेवाभीष्टदोऽसीति नित्यं गणपतेऽर्थिनाम्।
प्रसीद प्रार्थ्यतस्त्वां नृभिर्यतो विनीयसे॥ १७॥

त्वां गणेश्वर संसारतुषारार्दितविग्रहः।
प्रादुर्भव नमस्तुभ्यं स्तुषे मित्रमिव प्रियम्॥ १८॥

नमस्ते विघ्नराजाशु निवारय शुभेतरम्।
त्वमेवासि जगत्सर्वं यद्भूतं यच्च भव्यम्॥ १९॥

परत्रेह च सौख्याय त्वामेवाहं गणाधिप।
शरणं च मुमुक्षूणां प्रशंसन्ति प्रशस्तिभिः॥ २०॥

त्वामाहुः कवयश्चित्रमवेद्यमजमव्ययम्।
गणेश विद्याकामानामाविप्रमा मनीषिणम्॥ २१॥

शोणाब्जस्रग्भराश्लिष्टं सुधांशुफलसंनिभम्।
गणेशं नौमि तं वाण्यं यो रायो वनिर्महान्॥ २२॥

असदाज्ञां सुहृद्रक्षां विघ्नेश त्वयि कुर्वति।
सुखी भवति कौमारी ईशानो अप्रतिष्कुतः॥ २३॥

अनाथनाथ विघ्नेश नमस्तुभ्यं प्रसीद नः ।
मादृशां कृपणानां च त्रायतां मरुतां गणः ॥ २४ ॥

मूषकासन सर्वेषां वराणामुत्तमोत्तमम् ।
प्रचोदय नमस्तुभ्यं यस्ते सखिभ्य आवरम् ॥ २५ ॥

सहायमस्माकमथो नियुद्धे भवात्तशस्त्रः सततं गणेश ।
नमोस्तु तुभ्यं दुरिताहितात्मनां त्वयाध्यक्षेण पृतना जयेम ॥ २६ ॥

त्वमेव लोकरक्षार्थं जागर्षि गणनायक ।
प्रदातुं प्रेरयस्यग्निं देवं देवेभ्यो हविः ॥ २७ ॥

भवामः पीडिता नित्यं गणेश वृजिनाहितैः ।
पातुं दुष्कृतशत्रुभ्यः प्रत्यङ्नः सुमना भव ॥ २८ ॥

विनायक नमस्तुभ्यं सूनवे तस्य शूलिनः ।
यस्तमिस्रक्षयायोच्चैरासूर्यं रोहयद्दिवि ॥ २९ ॥

त्वदाज्ञया किलाग्नीन्दुभानवस्ते गणेश्वर ।
सततं निर्मलांल्लोकानाये तन्वन्ति रश्मिभिः ॥ ३० ॥

हन्तारं सर्वपापानां पातारं पुण्यकर्मणाम् ।
गणेश स्तौमि लोकानामध्यक्षं धर्मणामिमम् ॥ ३१ ॥

यो विनोदयतीशाङ्कादुमाङ्कं द्विरदानन ।
गर्भच्छिदोमिले एतावध्यक्षं धर्मणामिमम् ॥ ३२ ॥

यश्चिन्त्यते जितक्रोधैरपुनर्वृत्तये बुधैः ।
तं नमामि गणाधीशमध्यक्षं धर्मणामिमम् ॥ ३३ ॥

मनोनिधिभरः सोमः करिवक्त्रं प्रणम्य यत् ।
अवापावृत्तमुक्तिं तं वन्दस्व मारुतं गणम् ॥ ३४ ॥

यतस्त्वं विपदां हन्ता दातास्यखिलसम्पदाम् ।
अतो गणपते सद्भिर्नृभिः सुवीर उच्यसे ॥ ३५ ॥

याचे तत्काञ्चनं देहि गणेश त्वामकिञ्चनः ।
यत्तत्कृपणरक्षार्थं जेषिजिष्णो हि तं धनम् ॥ ३६ ॥

विनायकाशेषजगत्प्रणायक प्रसीद नः स्वीकृत पद्मपङ्कज ।
कृपार्णव त्वच्चरणाब्जसेविनामश्वपते गोपत उर्वरापते ॥ २७ ॥
पुनः किमागच्छसि पापसङ्घ त्वत्पीडितोऽहं शरणं गणेशम् ।
भजामि निर्लज्ज भवत्प्रसङ्गान्निवर्तस्व हृदयं तप्यते मे ॥ ३८ ॥
पयोद इव विघ्नेश चातकं तोयधारया ।
दरिद्रं पाहि मां स्नेहाद्राया विश्वपुषा सह ॥ ३९ ॥
त्वामेव चिन्तये तुभ्यं नमः सिद्धिविनायक ।
वरेण्यं वरदं सर्वं मरुत्सु विश्वभानुषु ॥ ४० ॥
शिवौ च श्रवणं नेत्रं शिवभक्तश्च केशवः ।
यो नार्चति गणेश त्वां न द्विषस्तवनो मम ॥ ४१ ॥
यस्त्वं भवसि सन्नद्धो वन्दे तं त्वां गणेश्वरम् ।
त्वद्भक्तारिविनाशाय स्थिरो रणाय संस्कृतः ॥ ४२ ॥
गणेश नृत्यत्त्वत्पादत्रिपुरध्वंसिभीर्यतः ।
शिवाग्रे किल धर्मांशोराहरयो रथयुजः ॥ ४३ ॥
विघ्नेश त्वत्करोत्सृष्टतोयक्रीडारवात्किल ।
भवन्त्युद्विजिता भानोराहरयो रथयुजः ॥ ४४ ॥
क्रीडतस्ते वियन्नद्यां श्रुत्वा विघ्नेश बृंहणम् ।
भीता भवन्ति चण्डांशोराहरयो रथयुजः ॥ ४५ ॥
त्वमेव गतिरुत्तमा भवाकुलितचेतसां
गणेश करुणाम्बुधे सुरेश शरणार्थिनाम् ।
भवन्तमेव सन्ततं भजाम्यचञ्चलेक्षणैः
पश्येम शरदः शतं जीवेम शरदः शतम् ॥ ४६ ॥
करीन्द्रमुख भारतीं चतुर्मुख मुखोद्गतां
स वेद लोकसम्मतां भवन्तमेव संस्मरे ।
तदा वयं शशिप्रभं विपक्षनेत्रभानुभिः
पश्येम शरदः शतं जीवेम शरदः शतम् ॥४७॥

त्रिनेत्रपुष्करं मिनश्रियं त्वदीयमुज्ज्वलं
प्रफुल्लविद्रुमप्रभं स्मरन्ति यन्महाशुभम्।
तदद्य सर्वकामदं विनिद्रनिश्चलेक्षणैः
**पश्येम शरदः शतं जीवेम शरदः शतम्॥** ४८॥

त्वमेव गुणमात्मानं कृतक्रियमविक्रियम्।
गणेश श्रुतसंपूर्वं **विद्माहि त्वा धनं जय**॥ ४९॥

प्रक्षालितभवत्पाद गलन्ति षण्मुखाग्रज।
पापकण्डूनिहत्यै **त्वामपो याचामि भेषजम्**॥ ५०॥

गणेश मां रक्षसि पूजया चेत्प्रीतिर्बुधानां निरुपाधिकारा।
पूर्वं न चेत्सत्कृतमानयोगाद्धितन्वते **प्रति भद्राय भद्रम्**॥ ५१॥

अर्कमण्डलमध्यस्थं पुरुषं द्विरदानन।
हिरण्मयं भजामस्त्वामुद्वयन्तमसस्परि॥ ५२॥

विघ्नेश मद्दुष्कृतशत्रुवर्गं वृत्रं पुरारातिमिवामरेशः।
कुरुष्व शान्तिं मम कुक्षि वह्नेस्त्वं **मायाभिरनवद्यमायिनम्**॥ ५३॥

अर्थवाञ्छां ददातीति चेतस्येतान् विनायकः।
प्रतिजानीहि लोकानां **जयतामिव दुन्दुभिः**॥ ५४॥

विश्राण नादमिष्टानां गणेशाग्रे सुकर्मिणाम्।
त्वमेव वन्द्यपादश्रीरसि **प्रियो नो अतिथिः**॥ ५५॥

क्रौञ्चारातिगुरो तुभ्यं नमः शङ्करनन्दन।
विघ्नेश भवदुःखार्त **अस्मा अस्मा इदन्धसः**॥ ५६॥

हेरम्ब त्वामहं तस्मात्प्रार्थये भक्तवत्सल।
कृपाब्धे त्वत्प्रपन्नानां **यदित्ससि स्तुतो मघम्**॥ ५७॥

ब्रह्माणं शङ्करं विष्णुमेकदन्तं विदुर्बुधाः।
त्वामेव सकलाँल्लोकानग्निं **च हव्यवाहनम्**॥ ५८॥

अपुण्यहिंसाशुभरक्षणत्वात्प्रयोजनं मन्मथवैरिपुत्र।
सतां मतिर्नास्ति गणेशहृद्या **सत्यं ब्रवीमि वध इत्सतस्य**॥ ५९॥

हृदि वा शिवयोरग्रे बहिर्वासि गणेश किम्।
संशयं द्रष्टुमेति त्वामिति वा इति मे मनः ॥ ६० ॥
गणेश त्वत्कटाक्षश्रीपक्षे ते च हि केवलम्।
अलं कमखिलार्थानामन्यं पक्षं च न प्रति ॥ ६१ ॥
उमावृषाङ्कयोरग्रे यत्र विघ्नेश वर्तसे।
सेवन्कृतनमस्कारस्तत्र देवाँउपह्वये ॥ ६२ ॥
कैवल्यप्राप्तये च श्रीवाक्सन्तानाभिवृद्धये।
गणेश यास्त्रिलोकानां गृणन्ति विप्र ते धियः ॥ ६३ ॥
समस्त देवतामूर्ते साधून्पाहि गणाधिप।
प्रसीद भूसुरैर्दत्तं पिबा सोममृतूँरनु ॥ ६४ ॥
परस्परं सुसंस्पृष्टं पितृपुत्रकयोरिव।
प्रसिद्धो विघ्नराजाहं त्वमस्माकं तवस्मसि ॥ ६५ ॥
यद्भक्तवरदोऽसीति विघ्नेशाभक्तविघ्नद।
कृतार्थोऽस्मि भवद्योगादुतोतत्सत्यमित्तव ॥ ६६ ॥
प्रसादसुमुखोऽस्माकं प्रादुर्भव गणेश्वर।
दधिक्षीराज्ययुक्तान्नं प्रते वयं ददामहे ॥ ६७ ॥
यत्तत्समस्तविद्यानां जन्मकृद्वासि संपदाम्।
गणेशालिङ्गितां लक्ष्मीमथा नो वर्द्धया गिरः ॥ ६८ ॥
नमस्ते देवदेवेश गणेश करुणानिधे।
त्वत्प्रसादात्सदास्माकं विभूतिरस्तु सूनृता ॥ ६९ ॥
नमो नमस्ते त्रिपुरान्तकात्मज विपाप्मना पुण्यसमूहपीडितान्।
पाहि त्वदीयाङ्घ्रिसरोरुहाश्रितांस्त्वं नः पश्चादधरादुत्तरात्पुरः ॥ ७० ॥
गणेश्वर त्वां भगवान्प्रसूतां शम्भुस्त्रिलोक्यां सुतलाभकीर्तिम्।
ब्रह्मर्षिदेवद्विजकीर्तनीयं ऋतप्रजातां बृहतीमविन्दत् ॥ ७१ ॥
गतिस्त्वमेवेति गणेश जाने तुभ्यं नमः स्कन्दगुरो प्रसीद।
त्वत्पादभक्त्याखिलकामदाता अहं देवानामुत मर्त्यानाम् ॥ ७२ ॥

तस्य प्रसूनुं शरणं प्रपद्ये गणेश्वर त्वां तरुणेन्दुमौलेः ।
यः शूलपाणेः स्वभुजप्रतापादेक इद्राजा जगतो बभूव ॥ ७३ ॥

जानाति किं तेन हि यद्धि पारं यः सर्वविद्यारमणोऽपि साक्षात् ।
महद्गणेशाखिलदेवराशिः सो अङ्ग वेद यदि वा न वेद ॥ ७४ ॥

नमस्कुरु गणाध्यक्षमेतं चित्तं भजान्वहं ।
वरदो हि स्वभक्तानामयं शिवाभिमर्शनः ॥ ७५ ॥

माहात्म्यं को नु जानाति तव स्वर्गफलार्थिनः ।
वीतविघ्नं गणेशार्यास्त्वया यज्ञं वितन्वते ॥ ७६ ॥

उपास्येऽमुं गणाधीशं भो चेतः कुत्र गच्छसि ।
शृणुष्वार्यमनायात विश्वविन्मनसस्पतिः ॥ ७७ ॥

भक्तवात्सल्यकारुण्यादस्मान्पाहि गणाधिप ।
किमुत त्वद्गुणांस्तोतुं भुवनस्य पते वयम् ॥ ७८ ॥

यतो गणपते प्राप्तगजाकारोऽसि कौतुकात् ।
अतः क्षितीन्द्रमध्येऽभूदिभो राजेव सुव्रतः ॥ ७९ ॥

धर्मैकशरणान्रक्ष साधून्विघ्नेश सुव्रतान् ।
पापानि गोद्विजातीनां जहि रक्षांसि सुक्रतो ॥ ८० ॥

गणेश त्वां महायोगी स्मरतीन्द्रियमारुतान् ।
निगृह्य चित्तानिन्द्रस्य अभीशूँरिव सारथिः ॥ ८१ ॥

श्रीपार्वतीपुत्र तव प्रसन्नं पादारविन्दं शरणं भजामः ।
गणेश नस्त्वत्करुणाविशेषात्सदासुगः पितुमाँ अस्तु पन्थाः ॥ ८२॥

इष्ट्वा त्वां विघ्नराजार्याश्चतुर्वर्गफलार्थिनः।
लभन्ते स्वानुकूलार्थान्साकमेकेन कर्मणा ॥ ८३ ॥

तयैव वेद्यमौलिस्त्वं श्रुतिवाचा गणेश्वर ।
त्रयीमयी त्वदुद्धार्य यज्ञं दधे सरस्वती ॥ ८४ ॥

विनायक त्वां प्रणमामि सद्भिर्विघ्नापहत्यै शुभकर्मनिष्ठैः ।
आराधनीयं सकलामराणां यज्ञस्य केतुं प्रथमं पुरोहितम् ॥ ८५ ॥

त्वामेव जाने सकलामराणां गतिर्गणेशाभयदानदक्षम्।
सतां क्षितिः स्वर्गसुखोन्मुखानां नाभिं यज्ञानां सदनं रयीणाम्॥८६॥

गणेशानुग्रहाया मुमपसारय दुष्कृतम्।
क्रतु भूमिषु विप्राणां सोमं सोमपते पिब॥ ८७॥

कदा त्वत्करुणा तुभ्यं नमो विघ्नेश मानसम्।
वत्सं प्रति ययौ स्नेहादाधेनुरिव धावतु॥ ८८॥

यदि वा कमलार्थिहृच्छिशो गणपतेर्मुदे।
रक्तपद्मसितांभोजैर्यजस्व जातवेदसम्॥ ८९॥

तस्मात्त्वमेव विघ्नेश पावनः सर्वदा भव।
स स्वामी श्रेयसे यस्माद्यो अस्मान्वीर आनयत्॥ ९०॥

सश्रीकं तव सामर्थ्यं विघ्नराजाश्विनौ किल।
अभूतां त्वत्पदध्यानात्कवी गम्भीरचेतसा॥ ९१॥

तथापि न त्वा विबुधाः स्मरन्ति विघ्नेश नः पाहि गतिस्त्वमेव।
इष्टं स्वकर्म तदुपास्त्यभावात्पुरः पश्यन्ति निहितमरतौ॥ ९२॥

सुहृद्भवर्धिविघ्नेश त्वन्मुदे कृतकर्मणाम्।
त्वामुद्दिश्य कृते ब्रह्मन्यज्ञे यज्ञेन उदव॥ ९३॥

वन्दे प्रपन्नं तनयं गणेशं त्वां दक्षिणामूर्ति शिवस्य तस्य।
यं भूसुराः सर्वहृदि प्रवेशमेकं सन्तं बहुधा कल्पयन्ति॥ ९४॥

त्वमेव शम्भुर्हरिरब्जयोनिर्गणेश कल्याणनिधे नमस्ते।
त्वदर्पितं यज्जगदन्तरात्मंस्तन्मे जुषस्व शिपिविष्ट हव्यम्॥ ९५॥

गतिः सकलभूतानां गणेश स्मरणं तव।
चरणस्वर्णपद्माभ्यामस्माकमुत्तमं कृधि॥ ९६॥

गणेशाश्रमवर्णानां गुरवे ब्रह्ममूर्तये।
साक्षाद्भव नमस्तुभ्यं विप्राय बृहते बृहत्॥ ९७॥

ऐरावतासन स्तुत्यो भवसि त्वं गणाधिप ।
आखुयानोऽपि देवानामद्धा देव महाँ असि ॥ ९८ ॥

प्रसीद निक्षेप इवाधनस्य त्वत्पादभक्तस्य दयानिधे मे ।
नमामि विघ्नेश्वर सर्वदा त्वां प्रचेतसममृतं सुप्रतीकम् ॥ ९९ ॥

प्रसीद पाहि विघ्नेश नमस्ते शरणार्थिनाम् ।
प्रदातुं त्वमभीष्टार्थानिवाशूर उत स्थिरः ॥ १०० ॥

गणेश्वरातप्तहृदामिनांशुभिर्ग्रीष्मे मृदुर्वातशितांशुशीतलः ।
त्वं सर्वदा रक्षसि भीतचेतसां दक्षो देवानामसि हि प्रियोमदः ॥ १०१॥

निवारयाज्ञानभवान्धकारं गणेश कल्याणनिधे नमस्ते ।
पाहि प्रसीद श्रुतवत्सलत्वादेव इव सविता सत्यधर्मा ॥ १०२ ॥

ददासि यस्त्वं किल भारतीं च गणेश लक्ष्मीं भवदाश्रितानाम् ।
ते द्वेऽधुना वाकमला च दैत्यान्सत्त्वं नो वीरवीर्याय चोदय ॥ १०३ ॥

स्वस्थचित्तं गणेश त्वां स्तुवन्ति प्रीतिभावतः ।
भवन्तं पुण्यवन्तस्तु शुद्धं शुद्धेन साम्ना ॥ १०४ ॥

नमामि विघ्नराजस्त्वं त्वमेव सर्ववाहनम् ।
त्वमेव वपुर्हृत्स्थानः पाता सोमानामसि ॥ १०५ ॥

गणेशोयमितीह चिन्तयताम् ।
हरत्यायविदां सर्वा असुरेभ्यः ॥ १०६ ॥

मखकामारित्रिनयनात्मजोऽसि त्वं रक्षसां क्रतुविघातकारिणाम् ।
हन्ता करीन्द्रमु खसोमवीरुधं यजमाने सुन्वति दक्षिणावति ॥१०७॥

वरप्रदं गणेशं नमस्करोमि नित्यम् ।
सुरोत्तमं सुराणां च रथीतमं रथीनाम् ॥ १०८ ॥

धृताङ्कुशगणेश त्रिनेत्रतनयास्मान्पाहि ।
त्वदीयाङ्गहस्तमुष्टिर्दक्षिणा पात्वंहसः ॥ १०९ ॥

अक्ष्वित्वं शूलपाणेस्त्वत्पितुस्ता अभूवन्।
विघ्नेश भान्ति श्रीभिर्याभिर्वा सुर्यः सह॥ ११० ॥

दन्तिश्रेष्ठमुखः पाशहस्तः सिन्दूरवर्णो गणेशः।
दातुं नः श्रियमायाति दीप्तिमान्भुवो जनस्य दिव्यस्य राजा॥ १११॥

किं नु ग्रहानुग्रहताविचित्रं भवत्सहायोऽस्ति यदीशपुत्र।
प्रसीद विघ्नेश भवत्प्रसादाद्यं कामये तं तमुग्रं कृणोमि॥ ११२ ॥

ध्यायामि तं काञ्चनशैलकुक्षौ गणेश्वरं किंपुरुषप्रसिद्धाः।
यं किन्नरास्तुम्बरुनारदाद्याः पूर्णगभस्तिमीळते सुपाणिम्॥ ११३ ॥

तुभ्यं नमस्ते कृतवह्निमूर्तिस्त्वमेव विघ्नेश्वर जातलीलः।
ददासि सङ्गोप्य तया विशेषाद्भागं देवेभ्यो हविषः सुजात॥ ११४ ॥

को नु त्वदन्यं शरणागताः श्रियः प्रसीद विश्वेश्वर भक्तवत्सल।
त्वदाश्रितं शिष्यमिवान्वहं गुरुः सुनीतिभिर्नयसि त्रायसे जनम्॥ ११५॥

चिन्तये वाश्रये कामं प्रसीद त्वां गणेश्वर।
सम्पूर्णमिव शीतांशुं जातं पर्वणि पर्वणि॥ ११६ ॥

गणेश्वरं विद्रुमपत्रकप्रभं वामाङ्कनिक्षिप्तकलत्रमिष्टदम्।
ध्यायेत्स विघ्नाधिपतेरनुग्रहात्सर्वामृद्धिमृध्नोति य एवं वेद॥ ११७॥

य इमं विघ्नराजस्य वेद पादस्तवं पठेत्।
स भवेत्पुण्यकृद्धीमान्क्षणमध्येऽष्टसिद्धिमान्।
प्रातर्मध्यंदिने सायं नित्यं यः प्रयतः पठेत्॥ ११८ ॥

अर्वाङ्मासत्रयात्तस्य पुरो भूत्वा गणेश्वरः।
जातिस्मरत्वं विज्ञानं वाक्सिद्धिं चाचलां श्रियम्॥ ११९ ॥

विज्ञानं निजरूपस्य ज्ञानं चोपनिषद्भवम्।
ददाति भक्तवात्सल्याच्छ्रीमान्सिद्धिविनायकः॥ १२० ॥

# गणेशवेदपादस्तुतिलहरी

## खण्डराजकृता

सिद्धेर्बुद्धेरधिपतिं नितरां भक्त्या नित्यं भजति यो मनुजः।
हे विघ्नाधीश सुरनाथ मुदा तस्य त्राता भवसि तस्य सखा॥ १॥
आत्मस्वरूपानुभवं सुखं यद्दुर्लभं भुवि।
देवदेवः शिवसुतस्तं नो दन्ती प्रचोदयात्॥ २॥
अहो गुणेश दृश्यते प्रदीयतेऽथ लभ्यते।
ततो गृहाण नः स्तुतिमुत प्रवर्धय मतिम्॥ ३॥
हस्तिवक्त्रलीलयेशसूनो विश्वसर्जनादिकस्य कर्तः।
तत्क्षमस्व यद्वदामि यस्मात् ब्रह्मणस्पते त्वमस्य यन्ता॥ ४॥
दरिद्रत्वं खलु बाधां करोति तवार्चा नः शुभदा रोचते न।
अहो दन्त्यास्य ततस्त्वदीयं तदस्मासु द्रविणं धेहि चित्रम्॥ ५॥
हे गणाधीश देवताभिवन्द्य किं नु वाच्यं जनैः सम्मान्य इत्थम्।
तन्मुदा स्वीकरोषि दीनबन्धो यस्त आतिथ्यमानुषे जुजोषत्॥ ६॥
अहो गणाधीश ते महत्त्वं कथं प्रवाच्यं नृपस्य सूनुम्।
सुरादिमान्यं हि भूमिदेवं ऋषिं चकार स्वपामहोभिः॥ ७॥
अहो नागेन्द्रास्य कदास्मदीयं गृहं त्यक्त्वा त्वत्सुदयार्द्रदृष्ट्या।
पयःसिन्धौ चारुतरं सुरत्नैः सहस्रद्वारं जगमा गृहं ते॥ ८॥
स्मृतिमात्रेण विघ्नानां नाशकं कामपूरकम्।
त्यक्त्वा शिवसुतं विप्रा मान्चिदन्यद्विशंसत॥ ९॥
न रोचतेऽस्मभ्यमन्यदहो गणपते कुरु।
अस्मांस्तथा तेऽनुदिनमनुस्तोमं मुदीमहि॥ १०॥
श्रीः कल्याणैः स्वर्णैर्मणिभिः सुनिर्मितैः पादत्राणाद्यैः सुयुतैः सुलक्षणैः।
तैर्हेरम्बागच्छ जवैः सुपाहि नः अश्वासो ये ते वृषणो रघुद्रुवः॥११॥
बाधन्ते नितरां म्लेछा ब्राह्मणान् ब्रह्मणस्पते।
तावका ये भटाः श्रेष्ठास्तेभिर्नस्तूर्यमागहि॥ १२॥

यैर्यत्नैः पुरा जगत् गुप्तं ते ऽधुना क ते।
सत्या चेद्दयाब्धिता तेभिर्नोऽविता भव ॥ १३ ॥
संसारसिन्धौ पतितोऽस्मि नक्राः पुत्रादयो मां वितुदन्ति यस्मात्।
अहो गणाधीश दयोदधिं त्वां कदामृळीकं सुमना अभिख्यम् ॥१४॥
यस्य भ्रूभंगतः सर्गस्थित्यन्ता विलसन्ति हि।
अहो गणपते तं त्वां क ईशानं न याचिषत् ॥ १५ ॥
हे नागेन्द्रास्येश्वरपुत्र नाथ यद्रत्नैः स्वर्णैर्जनितं त्विच्छातः।
क्षीराब्धौ ते शोभनमस्ति मह्यं यंधिष्माविप्रः स्तुवते वरूथम् ॥ १६॥
यन्मया मनसा वाचा कायेन दुरितं कृतम्।
तस्मान्मोचय मां देव त्वं हि वेत्थ यथातथम् ॥ १७ ॥
अस्मान्यो द्वेष्टि सततं यं च द्विष्मो वयं सदा।
अहो गणपते तूर्णं मा तस्योच्छेषि किंचन ॥ १८ ॥
मदीयषड्रिपून्कुतो न हंस्यहो गजानन।
पुरांकुशेन विद्विषां शिरो बिभेद वृष्णिना ॥ १९ ॥
न ते गजेन्द्रास्यैतद्विचित्रं स्वतन्त्रता या ईश्वरतत्त्वाच्च।
खलोऽपि नीचोऽप्येनोनिधिर्यः कृणोषि तं मर्त्येषु प्रशस्तम् ॥ २० ॥
अहो गणेश भूमिपाः स्तुवत्सु कांचनप्रदाः।
न लुब्धता शुभेश ते रयिं गृणत्सु धारय ॥ २१ ॥
मातामहमहाशैलं पितामहविवर्जितम्।
कण्ठोपरि गजं वन्दे जगत्कारणमच्युतम् ॥ २२ ॥
यस्य मातामही मेना यस्य नास्ति पितामही।
तं भालचन्द्रं वन्देऽहं प्रकृतेः पुरुषात्परम् ॥ २३ ॥
हे हेरम्ब तव हर्षः प्रकामं भक्ष्ये मोदकसमाख्ये मृदौ हि।
नित्यानन्द सुरपालो भवान्वै किं मे हव्यमहृणाना जुषेत ॥ २४ ॥
वेदान्शास्त्राण्यधीत्य पुत्रादि उत्पाद्येष्ट्वा मखैर्गणाधीश।
ज्ञानं संपाद्य सद्गुरोर्मुक्ताः घ्नन्तो वृत्राणि सूरिभिः स्याम ॥ २५ ॥

अहो दयोदधे सुपूर्णकाम सदा प्रमोदपूर्ण हे गणेश।
सुभक्तितोयदर्पितं सुभद्रमर्यभोजनं बिभर्षि॥ २६॥

वदन्त्यात्मेति हि वेदान्ता यां प्रधानं पुरुष इत्थं सांख्याः।
बभाषे हीश्वरमेनं योगः ऊरुज्योतिर्विविदुर्दीध्यानाः॥ २७॥

मदीयान्कामान् गणेश प्रदातुं कस्यास्ति शक्तिः।
स्वहस्तेनैव प्रदद्यात् महाहस्ती दक्षिणेन॥ २८॥

बाल्यादौ स्वप्नादिकेऽस्माभिर्यत्कृतम् वाचा तन्वा तेजसा चापि दुष्कृतम्
पापानां शत्रो दयाब्धे गजानन मानस्तस्मादेनसो देवरीरिषः॥ २९॥

अहो गणाधीश सुरासुरेश्वरं सिद्ध्या च बुद्ध्योभयतश्च सेवितम्।
सच्चित्सुखं त्वां सततं भजामहे कविं कवीनामुपमश्रवस्तमम्॥३०॥

विधिविष्णू महेशः इतरे सर्वकार्ये।
इभवक्त्रं नमन्ति नकिरेवा यथा त्वम्॥ ३१॥

अहो हेरम्ब जगत्ससर्ज अरक्षयो ह्यथ संजहार।
अहं त्वामेव सुपूजयामि तमु ज्येष्ठं नमसा हविर्भिः॥ ३२॥

अहो गणेश दूर्वादि भक्त्या यत्ते समर्पितम्।
नित्यतृप्तोऽपि देवेश जुषस्व प्रसु मामव॥ ३३॥

न साम्यं ते भविष्यति जगत्यां अये जिह्वे नमोऽस्तु ते यदि त्वम्।
गजास्यं सिद्धिबुद्धिनायकं वै सुशेवं ब्रह्मणस्पतिं गृणीषे॥ ३४॥

तथा कुरुष्व सिद्धिबुद्धिनाथ गजाननाय शम्भुबालकाय।
सदा स्वभक्तपालकाय तुभ्यं यथा भवे मीळ्हुषे अनागाः॥ ३५॥

भो हेरम्ब प्रीतियुतो गृहाण दूर्वां मोदकं सुशमीन्सुलाजान्।
दीनेभ्यः सुदीनदयायुतस्त्वं अस्मभ्यं च सौभगमा यजस्व॥ ३६॥

संसारसिन्धुतरणे न स्वल्पमपि नो भयम्।
गणेश ते महानौकां भूरि नाम मनामहे॥ ३७॥

अहो दन्त्यास्य श्रुतिर्न समर्था न वक्तुं देवगणाश्च समर्थाः ।
समर्थैका शिवशक्तिरुमा ते प्र ते माता महिमानमुवाच ॥ ३८ ॥

अहो हेरम्ब त्वदीया वयं हि सुतैर्मित्रैः संभजाम ।
त्वदीयां पूजां मुदा सर्वदैव सुरत्नासो देववीतिं गमेम ॥ ३९ ॥

हे हेरम्ब वयं सर्वदैव त्वत्पूजां कलयामः स्तुतिं च ।
तस्मात्त्वं करुणाब्धे गणेश स्वावेशो अनमीवो भवा नः ॥ ४० ॥

मत्तान् जनान् परिसंत्यज्य देव भो सिद्धिबुद्धिपते दीनपाल ।
दुःखादिभिः सततं पीडिता यत्त्वेमहे प्रतितन्नो जुषस्व ॥ ४१ ॥

हे देवदेव मदीयं सुतादिकं धेन्वादिकं पशुजातं दयानिधे ।
अज्ञं त्वदीयसमर्चापराङ्मुखं शं नो भव द्विपदे शं चतुष्पदे ॥ ४२ ॥

शिवपुत्रं त्वां भक्त्या देव कलयामो नित्यं हेरम्ब ।
धनिनः साख्यज्ञानाढ्याश्च अजरासस्ते सख्ये स्याम ॥ ४३ ॥

खलान् प्रमत्तांस्तव भक्तिहीनान् हिताहितज्ञानविहीनचित्तान् ।
अहो गणाधीश दयासमुद्र पितेव पुत्रान्प्रति नो जुषस्व ॥ ४४ ॥

अहो गणाधीश पूजां त्वदीयां सदा करिष्यामि भक्त्या ततस्त्वम् ।
समागच्छ शीघ्रमारुह्य चाखुं इषं रयिं पप्रथद्वाजमस्मे ॥ ४५ ॥

चिन्तामणिं भालचन्द्रं महोदरं पुत्रस्येश्वरं भक्तपालकम् ।
भक्त्या सुचित्तेन तं भजाम्यहं प्रातर्भगं पूषणं ब्रह्मणस्पतिम् ॥ ४६ ॥

हे गिरिजासुत पूजां स्तोत्रं ध्यानमपीह कृत्वा ते देव ।
दानदयाव्रत यागाद्यन्ते तेन वयं भगवन्तः स्याम ॥ ४७ ॥

कुतो विलम्बं कुरुषे यदि त्वं दीनवत्सलः ।
आगच्छ सिद्धिबुद्धिभ्यां यदि स्तोमं मम श्रवत् ॥ ४८ ॥

हे हेरम्बाहं तव बालकोऽस्मि मद्वाण्यो याः सन्ति हि बालवाण्यः ।
आनन्दाढ्यं शम्भुसुतं सदा ताः वर्धन्तु त्वा सुष्टुतयो गिरो मे ॥ ४९ ॥

काव्योक्तदोषसहितं विनिंद्यं स्तोत्रं त्विदं गणपते मयोक्तम्।
हे देवदेव करुणासमुद्र सूक्तस्य बोधि तनयं च जिन्व ॥ ५० ॥

अनेन प्रीयतां देवो भगवान् गिरिजासुतः।
गजाननोऽयं पूर्वेषामस्माकं कुलदैवतम् ॥ ५१ ॥

खण्डराजेन रचिता गणेशलहरी शुभा।
गणेशतुष्टिदा नित्यं वसतात् हृदये सताम् ॥ ५२ ॥

सम्पूज्य त्रिदशवरं गजाननं यो विघ्नेशस्तुतिलहरीं सदा पठेद्वै।
क्षीराब्धौ करिमुखपादपद्मे आकल्पं स हि निवसेद्गजाननः ॥ ५३ ॥

नाम्ना गुणैश्चापि शिवैव माता तातः शैवस्त्र्यंबकयज्वनामा।
मल्लारिदेवः कुलदैवतं मे श्रीकौशिकस्यास्ति कुले च जन्म ॥ ५४ ॥

## श्री स्वस्तिगर्भविनायकाष्टकम्

(सन्तानगोपालशर्मकृतम्)

श्रीपतिप्रियभागिनेय मुमासुतं शिवनन्दनम्
भक्तवत्सलमप्रमेय मनादिमन्तविवर्जितम्।
सर्वलोकहितङ्करं नमतामभीष्टद मुत्तमम्
स्वस्तिगर्भविनायकं प्रणमामि षण्मुखसोदरम् ॥ १ ॥

आखुवाहनमम्बिकासुतमप्रमेय गुणोज्वलम्
सर्वसिद्धिदमीश पुत्रमचिन्त्य पुण्यफलप्रदम्।
नारदादिमुनीन्द्र षट्पदसेवितांघ्रि सरोरुहम्
स्वस्तिगर्भविनायकं प्रणमामि शङ्करनन्दनम् ॥ २ ॥

दृप्तमुग्धशठादि दुस्त्यज विघ्नकारणवारणम्
सच्चरित्रविचित्र दुस्त्यज विघ्नवारणवारणम्।
वासवादि सुरासुरैरनिशं प्रपूजितविग्रहम्
स्वस्तिगर्भविनायकं प्रणमामि लोकहितङ्करम् ॥ ३ ॥

सर्वरोगहरं हरात्मजमम्बुजासन पूजितम्
भक्तवत्सलमग्रदिक्परिपालकं त्रिशिरःपुरे।
नन्दिवन्दितमिन्दु भूषणमिन्दिरा रमणप्रियम्
स्वस्तिगर्भविनायकं प्रणमामि सर्वसुखप्रदम् ॥ ४ ॥

शास्तृ नन्दिसदाशिवेन्द्र नराननादिविनायकैः
वेदमातृ जगद्गुरूतम शङ्करादिभिरेव च।
स्कन्दमारुतिदक्षिणास्य नवग्रहैरपि दुर्गया
सर्वतः परिवारितोऽयमतीव चारु विराजते ॥ ५ ॥

वेदपारगतै रभिष्टुतमन्वहं निजसन्निधौ
वेदमूर्तिममोघ भाग्यदमादिमादि गजाननम्।
वेदशास्त्र पुराणपण्डितमण्डितप्रिय सन्निधिम्
वेद को न्विममुत्तमोत्तमदैवतं कलिनाशनम् ॥ ६ ॥

त्रैशिरःपुरमातृभूतशिवालयं परिपालयन्
पूर्वदिक्स्थित एष नूनमपूर्वसुन्दरविग्रहः।
स्वस्तिगर्भविनायकोऽयमुपास्यतामनु सेव्यताम्
प्राप्तुमायुररोगतामतुलं यशोऽखिल संपदः ॥ ७ ॥

लड्डुकै रुचिरैरतिप्रिय मोदकै स्सरसैर्नवैः
इक्षुखण्ड कपित्थदाडिमनारिकेल फलैरपि।
एकविंशति संख्यया कृतवन्दनैरपि तोषितः
स्वस्तिगर्भविनायको विदधाति नः शुभमङ्गलम् ॥ ८ ॥

*(திருச்சி மலைக்கோட்டையின் கீழ்புறத்துக் காவலர் நன்றுடையான் (ஸ்வஸ்தி கர்ப்பர்) விநாயகர். மலையிலுள்ள தாயுமான வரும் நன்றுடையான் என்றே பெயர் பெற்றவர்.)*

# गणेशगीता

## प्रथमोऽध्यायः

व्यास उवाच

अथ गीतां प्रवक्ष्यामि योगमार्गप्रकाशिनीम्।
निरुक्ता पृच्छते सूत राज्ञे गजमुखेन या॥ १॥

वरेण्य उवाच॥

विघ्नेश्वर महाबाहो सर्वविद्याविशारद।
सर्वशास्त्रार्थतत्त्वज्ञ योगं मे वक्तुमर्हसि॥ २॥

श्रीगजानन उवाच॥

सम्यग्व्यवसिता राजन्मतिस्तेऽनुग्रहान्मम।
शृणु गीतां प्रवक्ष्यामि योगामृतमयीं नृप॥ ३॥
न योगं योगमित्याहुर्योगो योगो न च श्रियः।
न योगो विषयैर्योगो न च मात्रादिभिस्तथा॥ ४॥
योगो यः पितृमात्रादेर्न स योगो नराधिप।
यो योगो बन्धुपुत्रादेर्यश्चाष्टभूतिभिः सह॥ ५॥
न स योगः स्त्रिया योगो जगदद्भुतरूपया।
राज्ययोगश्च नो योगो न योगो गजवाजिभिः॥ ६॥
योगो नेन्द्रपदस्यापि योगो योगार्थिनः प्रियः।
योगो यः सत्यलोकस्य न स योगो मतो मम॥ ७॥
शैवस्य योगो नो योगो वैष्णवस्य पदस्य यः।
न योगो भूप सूर्यत्वं चन्द्रत्वं न कुबेरता॥ ८॥
नानिलत्वं नानलत्वं नामरत्वं न कालता।
न वारुण्यं न नैर्ऋत्यं न योगः सार्वभौमता॥ ९॥
योगं नानाविधं भूप युञ्जन्ति ज्ञानिनस्तु तम्।
भवन्ति वितृषा लोके जिताहारा विरेतसः॥ १०॥

पावयन्त्यखिलाँल्लोकान्वशीकृतजगत्त्रयाः।
करुणापूर्णहृदया बोधयन्त्यपि कांश्चन॥ ११॥
जीवन्मुक्ता ह्रदे मग्नाः परमानन्दरूपिणि।
निमील्याक्षीणि पश्यन्तः परं ब्रह्म हृदि स्थितम्॥ १२॥
ध्यायन्तः परमं ब्रह्म चित्ते योगवशीकृतम्।
भूतानि स्वात्मना तुल्यं सर्वाणि गणयन्ति ते॥ १३॥
येन केनचिदाच्छिन्ना येन केनचिदाहताः।
येन केनचिदाकृष्टा येन केनचिदाश्रिताः॥ १४॥
करुणापूर्णहृदया भ्रमन्ति धरणीतले।
अनुग्रहाय लोकानां जितक्रोधा जितेन्द्रियाः॥ १५॥
देहमात्रभृतो भूप समलोष्टाश्मकाञ्चनाः।
एतादृशा महाभागाः स्युश्चक्षुर्गोचराः प्रिय॥ १६॥
तमिदानीमहं वक्ष्ये शृणु योगमनुत्तमम्।
श्रुत्वा यं मुच्यते जन्तुः पापेभ्यो भवसागरात्॥ १७॥
शिवे विष्णौ च शक्तौ च सूर्ये मयि नराधिप।
याऽभेदबुद्धिर्योगः स सम्यग्योगो मतो मम॥ १८॥
अहमेव जगद्यस्मात्सृजामि पालयामि च।
कृत्वा नानाविधं वेषं संहरामि स्वलीलया॥ १९॥
अहमेव महाविष्णुरहमेव सदाशिवः।
अहमेव महाशक्तिरहमेवार्यमा प्रिय॥ २०॥
अहमेको नृणां नाथो जातः पञ्चविधः पुरा।
अज्ञानान्मां न जानन्ति जगत्कारणकारणम्॥ २१॥
मत्तोऽग्निरापो धरणी मत्त आकाशमारुतौ।
ब्रह्मा विष्णुश्च रुद्रश्च लोकपाला दिशो दश॥ २२॥
वसवो मनवो गावो मनवः पशवोऽपि च।
सरितः सागरा यक्षा वृक्षाः पक्षिगणा अपि॥ २३॥

तथैकविंशतिः स्वर्गा नागाः सप्त वनानि च।
मनुष्याः पर्वताः साध्याः सिद्धा रक्षोगणास्तथा ॥ २४ ॥
अहं साक्षी जगच्चक्षुरलिप्तः सर्वकर्मभिः।
अविकारोऽप्रमेयोऽहमव्यक्तो विश्वगोऽव्ययः ॥ २५ ॥
अहमेव परं ब्रह्माव्ययानन्दात्मकं नृप।
मोहयत्यखिलान्माया श्रेष्ठान्मम नरानमून् ॥ २६ ॥
सर्वदा षड्विकारेषु तानियं यो जयेद्भृशम्।
हित्वाजापटलं जन्तुरनेकैर्जन्मभिः शनैः ॥ २७ ॥
विरज्य विन्दति ब्रह्म विषयेषु सुबोधतः।
अच्छेद्यं शस्त्रसङ्घातैरदाह्यमनलेन च ॥ २८ ॥
अक्लेद्यं भूप भुवनैरशोष्यं मारुतेन च।
अवध्यं वध्यमानेऽपि शरीरेऽस्मिन्नराधिप ॥ २९ ॥
यामिमां पुष्पितां वाचं प्रशंसन्ति श्रुतीरिताम्।
त्रयीवादरता मूढास्ततोऽन्यन्मन्वतेऽपि न ॥ ३० ॥
कुर्वन्ति सततं कर्म जन्ममृत्युफलप्रदम्।
स्वर्गैश्वर्यरता ध्वस्तचेतना भोगबुद्धयः ॥ ३१ ॥
संपादयन्ति ते भूप स्वात्मना निजबन्धनम्।
संसारचक्रं युञ्जन्ति जडाः कर्मपरा नराः ॥ ३२ ॥
यस्य यद्विहितं कर्म तत्कर्तव्यं मदर्पणम्।
ततोऽस्य कर्मबीजानामुच्छिन्नाः स्युर्महाङ्कुराः ॥ ३३ ॥
चित्तशुद्धिश्च महती विज्ञानसाधिका भवेत्।
विज्ञानेन हि विज्ञातं परं ब्रह्म मुनीश्वरैः ॥ ३४ ॥
तस्मात्कर्माणि कुर्वीत बुद्धियुक्तो नराधिप।
न त्वकर्मा भवेत्कोऽपि स्वधर्मत्यागवांस्तथा ॥ ३५ ॥
जहाति यदि कर्माणि ततः सिद्धिं न विन्दति।
आदौ ज्ञाने नाधिकारः कर्मण्येव स युज्यते ॥ ३६ ॥

कर्मणा शुद्धहृदयोऽभेदबुद्धिमुपैष्यति।
स च योगः समाख्यातोऽमृतत्वाय हि कल्पते॥ ३७॥
योगमन्यं प्रवक्ष्यामि शृणु भूप तमुत्तमम्।
पशौ पुत्रे तथा मित्रे शत्रौ बन्धौ सुहृज्जने॥ ३८॥
बहिर्दृष्ट्या च समया हृत्स्थया लोकयेत्पुमान्।
सुखे दुःखे तथाऽमर्षे हर्षे भीतौ समो भवेत्॥ ३९॥
रोगाप्तौ चैव भोगाप्तौ जये वा विजयेऽपि च।
श्रियोऽयोगे च योगे च लाभालाभे मृतावपि॥ ४०॥
समो मां वस्तुजातेषु पश्यन्नन्तर्बहिः स्थितम्।
सूर्ये सोमे जले वह्नौ शिवे शक्तौ तथानिले॥ ४१॥
द्विजे हृदि महानद्यां तीर्थे क्षेत्रेऽघनाशिनि।
विष्णौ च सर्वदेवेषु तथा यक्षोरगेषु च॥ ४२॥
गन्धर्वेषु मनुष्येषु तथा तिर्यग्भवेषु च।
सततं मां हि यः पश्येत्सोऽयं योगविदुच्यते॥ ४३॥
संपराहृत्य स्वार्थेभ्य इन्द्रियाणि विवेकतः।
सर्वत्र समताबुद्धिः स योगो भूप मे मतः॥ ४४॥
आत्मानात्मविवेकेन या बुद्धिर्दैवयोगतः।
स्वधर्मासक्तचित्तस्य तद्योगो योग उच्यते॥ ४५॥
धर्माधर्मौ जहातीह तया त्यक्त उभावपि।
अतो योगाय युञ्जीत योगो वैधेषु कौशलम्॥ ४६॥
धर्माधर्मफले त्यक्त्वा मनीषी विजितेन्द्रियः।
जन्मबन्धविनिर्मुक्तः स्थानं संयात्यनामयम्॥ ४७॥
यदा ह्यज्ञानकालुष्यं जन्तोर्बुद्धिः क्रमिष्यति।
तदासौ याति वैराग्यं वेदवाक्यादिषु क्रमात्॥ ४८॥
त्रयी विप्रतिपन्नस्य स्थाणुत्वं यास्यते यदा।
परात्मन्यचला बुद्धिस्तदासौ योगमाप्नुयात्॥ ४९॥

मानसानखिलान्कामान्यदा धीमांस्त्यजेत्प्रिय।
स्वात्मनि स्वेन संतुष्टः स्थिरबुद्धिस्तदोच्यते॥ ५०॥
वितृष्णः सर्वसौख्येषु नोद्विग्नो दुःखसंगमे।
गतसाध्वसरुड्रागः स्थिरबुद्धिस्तदोच्यते॥ ५१॥
यथाऽयं कमठोऽङ्गानि सङ्कोचयति सर्वतः।
विषयेभ्यस्तथा खानि संकर्षेद्योगतत्परः॥ ५२॥
व्यावर्तन्तेऽस्य विषयास्त्यक्ताहारस्य वर्ष्मिणः।
विना रागं च रागोऽपि दृष्ट्वा ब्रह्म विनश्यति॥ ५३॥
विपश्चिद्यतते भूप स्थितिमास्थाय योगिनः।
मन्थयित्वेन्द्रियाण्यस्य हरन्ति बलतो मनः॥ ५४॥
युक्तस्तानि वशे कृत्वा सर्वदा मत्परो भवेत्।
संयतानीन्द्रियाणीह यस्यासौ कृतधीर्मतः॥ ५५॥
चिन्तयानस्य विषयान्संगस्तेषूपजायते।
कामः संजायते तस्मात्ततः क्रोधोऽभिवर्धते॥ ५६॥
कोधादज्ञानसम्भूतिर्विभ्रमस्तु ततः स्मृतेः।
भ्रंशात्स्मृतेर्मतेर्ध्वंसस्तद्ध्वंसात्सोऽपि नश्यति॥ ५७॥
विना द्वेषं च रागं च गोचरान्यस्तु खैश्चरेत्।
स्वाधीनहृदयो वश्यैः सन्तोषं स समृच्छति॥ ५८॥
त्रिविधस्यापि दुःखस्य सन्तोषे विलयो भवेत्।
प्रज्ञया संस्थितश्चायं प्रसन्नहृदयो भवेत्॥ ५९॥
विना प्रसादं न मतिर्विना मत्या न भावना।
विना तां न शमो भूप विना तेन कुतः सुखम्॥ ६०॥
इन्द्रियाश्वान्विचरतो विषयाननुवर्तते।
यन्मनस्तन्मतिं हन्यादप्सु नावं मरुद्यथा॥ ६१॥
या रात्रिः सर्वभूतानां तस्यां निद्राति नैव सः।
न स्वपन्तीह ते यत्र सा रात्रिस्तस्य भूमिप॥ ६२॥

सरितां पतिमायान्ति वनानि सर्वतो यथा।
आयान्ति यं तथा कामा न स शान्तिं कचिल्लभेत्॥ ६३ ॥
अतस्तानीह संरुध्य सर्वतः खानि मानवः।
स्वस्वार्थेभ्यः प्रधावन्ति बुद्धिरस्य स्थिरा तदा॥ ६४ ॥
ममताहंकृती त्यक्त्वा सर्वान्कामांश्च यस्त्यजेत्।
नित्यं ज्ञानरतो भूत्वा ज्ञानान्मुक्तिं स यास्यति॥ ६५ ॥
एवं ब्रह्मधियं भूप यो विजानाति दैवतः।
तुर्यामवस्थां प्राप्यापि जीवन्मुक्तिं प्रयास्यति॥ ६६ ॥

ॐ तत्सदिति श्रीमद्गणेशगीतासूपनिषदर्थगर्भासु योगामृतार्थशास्त्रे श्रीमन्महागणेशपुराणे उत्तरखण्डे बालचरिते गजाननवरेण्यसंवादे सांख्यसारार्थयोगो नाम प्रथमोऽध्यायः

## द्वितीयोऽध्यायः

वरेण्य उवाच॥
ज्ञाननिष्ठा कर्मनिष्ठा द्वयं प्रोक्तं त्वया विभो।
अवधार्य वदैकं मे निःश्रेयसकरं नु किम्॥ १ ॥
गजानन उवाच॥
अस्मिंश्चराचरे स्थित्यौ पुरोक्ते द्वे मया प्रिय।
सांख्यानां बुद्धियोगेन वैधयोगेन कर्मणाम्॥ २ ॥
अनारम्भेण वैधानां निष्क्रियः पुरुषो भवेत्।
न सिद्धिं याति संत्यागात्केवलात्कर्मणो नृप॥ ३ ॥
कदाचिदक्रियः कोऽपि क्षणं नैवावतिष्ठते।
अस्वतन्त्रः प्रकृतिजैर्गुणैः कर्म च कार्यते॥ ४ ॥
कर्मकारीन्द्रियग्रामं नियम्यास्ते स्मरन्पुमान्।
तद्गोचरान्मन्दचित्तो धिगाचारः स भाष्यते॥ ५ ॥
तद्ग्रामं संनियम्यादौ मनसा कर्म चारभेत्।
इन्द्रियैः कर्मयोगं यो वितृष्णः स परो नृप॥ ६ ॥

अकर्मणः श्रेष्ठतमं कर्मानीहाकृतं तु यत्।
वर्ष्मणः स्थितिरप्यस्याकर्मणो नैव सेत्स्यति ॥ ७ ॥
असमर्प्य निबध्यन्ते कर्म तेन जना मयि।
कुर्वीत सततं कर्मानाशोऽसङ्गो मदर्पणम् ॥ ८ ॥
मदर्थे यानि कर्माणि तानि बध्नन्ति न क्वचित्।
सवासनमिदं कर्म बध्नाति देहिनं बलात् ॥ ९ ॥
वर्णान्सृष्ट्वाऽवदं चाहं सयज्ञांस्तान्पुरा प्रिय।
यज्ञेन ऋद्ध्यतामेष कामदः कल्पवृक्षवत् ॥ १० ॥
सुरांश्चानेन प्रीणध्वं सुरास्ते प्रीणयन्तु वः।
लभध्वं परमं स्थानमन्योन्यप्रीणनात्स्थिरम् ॥ ११ ॥
इष्टा देवाः प्रदास्यन्ति भोगानिष्टान्सुतर्पिताः।
तैर्दत्तांस्तान्नरस्तेभ्योऽदत्वा भुङ्क्ते स तस्करः ॥ १२ ॥
हुतावशिष्टभोक्तारो मुक्ताः स्युः सर्वपातकैः।
अदन्त्येनो महापापा आत्महेतोः पचन्ति ये ॥ १३ ॥
ऊर्जो भवन्ति भूतानि देवादन्नस्य सम्भवः।
यज्ञाच्च देवसम्भूतिस्तदुत्पत्तिश्च वैधतः ॥ १४ ॥
ब्रह्मणो वैधमुत्पन्नं मत्तो ब्रह्मसमुद्भवः।
अतो यज्ञे च विश्वस्मिन् स्थितं मां विद्धि भूमिप ॥ १५ ॥
संसृतीनां महाचक्रं क्रामितव्यं विचक्षणैः।
स मुदा प्रीणते भूपेन्द्रियक्रीडोऽधमो जनः ॥ १६ ॥
अन्तरात्मनि यः प्रीत आत्मारामोऽखिलप्रियः।
आत्मतृप्तो नरो यः स्यात्तस्यार्थो नैव विद्यते ॥ १७ ॥
कार्याकार्यकृतीनां स नैवाप्नोति शुभाशुभे।
किञ्चिदस्य न साध्यं स्यात्सर्वजन्तुषु सर्वदा ॥ १८ ॥
अतोऽसक्ततया भूप कर्तव्यं कर्म जन्तुभिः।
सक्तोऽगतिमवाप्नोति मामवाप्नोति तादृशः ॥ १९ ॥

परमां सिद्धिमापन्नाः पुरा राजर्षयो द्विजाः।
संग्रहाय हि लोकानां तादृशं कर्म चारभेत्॥ २० ॥
श्रेयान्यत्कुरुते कर्म तत्करोत्यखिलो जनः।
मनुते यत्प्रमाणं स तदेवानुसरत्यसौ॥ २१ ॥
विष्टपे मे न साध्योऽस्ति कश्चिदर्थो नराधिप।
अलब्धश्च न लब्धव्यः कुर्वे कर्म तथाप्यहम्॥ २२ ॥
न कुर्वेऽहं यदा कर्म स्वतन्त्रोऽलसभावितः।
करिष्यन्ति मम ध्यानं सर्वे वर्णा महामते॥ २३ ॥
भविष्यन्ति ततो लोका उच्छिन्नाः संप्रदायिनः।
हन्ता स्यामस्य लोकस्य विधाता सङ्करस्य च॥ २४ ॥
कामिनो हि सदा कामैरज्ञानात्कर्मकारिणः।
लोकानां संग्रहायैतद्विद्वान् कुर्यादसक्तधीः॥ २५ ॥
विभिन्नत्वमतिं जह्यादज्ञानां कर्मचारिणाम्।
योगयुक्तः सर्वकर्माण्यर्पयेन्मयि कर्मकृत्॥ २६ ॥
अविद्यागुणसाचिव्यात्कुर्वन्कर्माण्यतन्द्रितः।
अहङ्काराद्भिन्नबुद्धिरहं कर्तेति योऽब्रवीत्॥ २७ ॥
यस्तु वेत्त्यात्मनस्तत्त्वं विभागाद्गुणकर्मणोः।
करणं विषये वृत्तमिति मत्वा न सज्जते॥ २८ ॥
कुर्वन्ति सफलं कर्म गुणैस्त्रिभिर्विमोहिताः।
अविश्वस्तः स्वात्मद्रुहो विश्वविन्नैव लङ्घयेत्॥ २९ ॥
नित्यं नैमित्तिकं तस्मान्मयि कर्मार्पयेद्बुधः।
त्यक्त्वाहंममताबुद्धिं परां गतिमवाप्नुयात्॥ ३० ॥
अनीर्ष्यन्तो भक्तिमन्तो ये मयोक्तमिदं शुभम्।
अनुतिष्ठन्ति ये सर्वे मुक्तास्तेऽखिलकर्मभिः॥ ३१ ॥

ये चैव नानुतिष्ठन्ति त्वशुभाहतचेतसः।
ईर्ष्यमाणान्महामूढान्नष्टांस्तान्विद्धि मे रिपून्॥ ३२॥
तुल्यं प्रकृत्या कुरुते कर्म यज्ज्ञानवानपि।
अनुयाति च तामेवाग्रहस्तत्र मुधा मतः॥ ३३॥
कामश्चैव तथा क्रोधः खानामर्थेषु जायते।
नैतयोर्वश्यतां यायादस्य विध्वंसकौ यतः॥ ३४॥
शस्तोऽगुणो निजो धर्मः साङ्गादन्यस्य धर्मतः।
निजे तस्मिन्मृतिः श्रेयोऽपरत्र भयदः परः॥ ३५॥
वरेण्य उवाच॥
पुमान्यत्कुरुते पापं स हि केन नियुज्यते
अकाङ्क्षन्नपि हेरम्ब प्रेरितः प्रबलादिव॥ ३६॥
श्रीगजानन उवचा॥
कामक्रोधौ महापापौ गुणद्वयसमुद्भवौ।
नयन्तौ वश्यतां लोकान् विद्ध्येतौ द्वेषिणौ वरौ॥ ३७॥
आवृणोति यथा माया जगद्बाष्पो जलं यथा।
वर्षामेघो यथा भानुं तद्वत्कामोऽखिलांश्च रुट्॥ ३८॥
प्रतिपत्तिमतो ज्ञानं छादितं सततं द्विषा।
इच्छात्मकेन तरसा दुष्पोष्येण च शुष्मिणा॥ ३९॥
आश्रित्य बुद्धिमनसी इन्द्रियाणि स तिष्ठति।
तैरेवाच्छादितप्रज्ञो ज्ञानिनं मोहयत्यसौ॥ ४०॥
तस्मान्नियम्य तान्यादौ स मनांसि नरो जयेत्।
ज्ञानविज्ञानयोः शान्तिकरं पापं मनोभवम्॥ ४१॥
यतस्तानि पराण्याहुस्तेभ्यश्च परमं मनः।
ततोऽपि हि परा बुद्धिरात्मा बुद्धेः परो मतः॥ ४२॥

बुद्ध्वैवमात्मनात्मानं संस्तभ्यात्मानमात्मना।
हत्वा शत्रुं कामरूपं परं पदमवाप्नुयात्॥ ४३॥

ॐ तत्सदिति श्रीमद्गणेशगीतासूपनिषदर्थगर्भासु योगामृतार्थशास्त्रे श्रीगणेशपुराणे उत्तरखण्डे गजाननवरेण्यसंवादे कर्मयोगो नाम द्वितीयोऽध्यायः ॥

## तृतीयोऽध्यायः

श्रीगजानन उवाच॥
पुरा सर्गादिसमये त्रैगुण्यं त्रितनूरहम्।
निर्माय चैनमवदं विष्णवे योगमुत्तमम्॥ १॥
अर्यम्णे सोऽब्रवीत्सोऽपि मनवे निजसूनवे।
ततः परम्परायातं विदुरेनं महर्षयः॥ २॥
कालेन बहुना चायं नष्टः स्याच्चरमे युगे।
अश्रद्धेयो ह्यविश्वास्यो विगीतव्यश्च भूमिप॥ ३॥
एवं पुरातनं योगं श्रुतवानसि मन्मुखात्।
गुह्याद्गुह्यतरं वेदरहस्यं परमं शुभम्॥ ४॥
वरेण्य उवाच॥
साम्प्रतं चावतीर्णोऽसि गर्भतस्त्वं गजानन।
प्रोक्तवान्कथमेतं त्वं विष्णवे योगमुत्तमम्॥ ५॥
गणेश उवाच॥
अनेकानि च ते जन्मान्यतीतानि ममापि च।
संस्मरे तानि सर्वाणि न स्मृतिस्तव वर्तते॥ ६॥
मत्त एव महाबाहो जाता विष्ण्वादयः सुराः।
मय्येव च लयं यान्ति प्रलयेषु युगे युगे॥ ७॥
अहमेव परो ब्रह्मा महारुद्रोऽहमेव च।
अहमेव जगत्सर्वं स्थावरं जङ्गमं च यत्॥ ८॥

अजोऽव्ययोऽहं भूतात्माऽनादिरीश्वर एव च।
आस्थाय त्रिगुणां मायां भवामि बहुयोनिषु ॥ ९ ॥
अधर्मोपचयो धर्मापचयो हि यदा भवेत्।
साधून्संरक्षितुं दुष्टांस्ताडितुं सम्भवाम्यहम् ॥ १० ॥
उच्छिद्याधर्मनिचयं धर्मं संस्थापयामि च।
हन्मि दुष्टांश्च दैत्यांश्च नानालीलाकरो मुदा ॥ ११ ॥
वर्णाश्रमान्मुनीन्साधून्पालये बहुरूपधृक्।
एवं यो वेत्ति सम्भूतीर्मम दिव्या युगे युगे ॥ १२ ॥
तत्तत्कर्म च वीर्यं च मम रूपं समासतः।
त्यक्त्वाहंममताबुद्धिं न पुनर्भूः स जायते ॥ १३ ॥
निरीहा निर्भयारोषा मत्परा मद्व्यपाश्रयाः।
विज्ञानतपसा शुद्धा अनेके मामुपागताः ॥ १४ ॥
येन येन हि भावेन संसेवन्ते नरोत्तमाः।
तथा तथा फलं तेभ्यः प्रयच्छाम्यव्ययः स्फुटम् ॥ १५ ॥
जनाः स्युरितरे राजन्मम मार्गानुयायिनः।
तथैव व्यवहारं ते स्वेषु चान्येषु कुर्वते ॥ १६ ॥
कुर्वन्ति देवताप्रीतिं काङ्क्षन्तः कर्मणां फलम्।
प्राप्नुवन्तीह ते लोके शीघ्रं सिद्धिं हि कर्मजाम् ॥ १७ ॥
चत्वारो हि मया वर्णा रजःसत्त्वतमोंऽशतः।
कर्मांशतश्च संसृष्टा मृत्युलोके मयानघ ॥ १८ ॥
कर्तारमपि तेषां मामकर्तारं विदुर्बुधाः।
अनादिमीश्वरं नित्यमलिप्तं कर्मजैर्गुणैः ॥ १९ ॥
निरीहं योऽभिजानाति कर्म बध्नाति नैव तम्।
चक्रुः कर्माणि बुद्ध्वैवं पूर्वं पूर्वं मुमुक्षवः ॥ २० ॥

वासनासहितादाद्यात्संसारकारणाद्दृढात्।
अज्ञानबन्धनाज्जन्तुर्बुद्ध्वायं मुच्यतेऽखिलात्॥ २१॥

तदकर्म च कर्माणि कथयाम्यधुना तव।
यत्र मौनं गता मोहादृषयो बुद्धिशालिनः॥ २२॥

तत्त्वं मुमुक्षुणा ज्ञेयं कर्माकर्मविकर्मणाम्।
त्रिविधानीह कर्माणि सुनिम्नैषां गतिः प्रिय॥ २३॥

क्रियायामक्रियाज्ञानमक्रियायां क्रियामतिः।
यस्य स्यात्स हि मर्त्येऽस्मिँल्लोके मुक्तोऽखिलार्थकृत्॥ २४॥

कर्माङ्कुरवियोगेन यः कर्माण्यारभेन्नरः।
तत्त्वदर्शननिर्दग्धक्रियमाहुर्बुधा बुधम्॥ २५॥

फलतृष्णां विहाय स्यात्सदा तृप्तो विसाधनः।
उद्युक्तोऽपि क्रियां कर्तुं किंचिन्नैव करोति सः॥ २६॥

निरीहो निगृहीतात्मा परित्यक्तपरिग्रहः।
केवलं वै गृहं कर्माचरन्नायाति पातकम्॥ २७॥

अद्वन्द्वोऽमत्सरो भूत्वा सिद्ध्यसिद्ध्योः समश्च यः।
यथाप्राप्त्येह सन्तुष्टः कुर्वन्कर्म न बध्यते॥ २८॥

अखिलैर्विषयैर्मुक्तो ज्ञानविज्ञानवानपि।
यज्ञार्थं तस्य सकलं कृतं कर्म विलीयते॥ २९॥

अहमग्निर्हविर्होता हुतं यन्मयि चार्पितम्।
ब्रह्माप्तव्यं च तेनाथ ब्रह्मण्येव यतो रतः॥ ३०॥

योगिनः केचिदपरे दिष्टं यज्ञं वदन्ति च।
ब्रह्माग्निरेव यज्ञो वै इति केचन मेनिरे॥ ३१॥

संयमाग्नौ परे भूप इन्द्रियाण्युपजुह्वति।
खाग्निष्वन्ये तद्विषयाञ्छब्दादीनुपजुह्वति॥ ३२॥

प्राणानामिन्द्रियाणां च परे कर्माणि कृत्स्नशः।
निजात्मरतिरूपेऽग्नौ ज्ञानदीप्ते प्रजुह्वति॥ ३३॥

द्रव्येण तपसा वापि स्वाध्यायेनापि केचन।
तीव्रव्रतेन यतिनो ज्ञानेनापि यजन्ति माम्॥ ३४॥

प्राणेऽपानं तथा प्राणमपाने प्रक्षिपन्ति ये।
रुद्ध्वा गतीश्चोभयोस्ते प्राणायामपरायणाः॥ ३५॥

जित्वा प्राणान्प्राणगतीरुपजुह्वति तेषु च।
एवं नानायज्ञरता यज्ञध्वंसितपातकाः॥ ३६॥

नित्यं ब्रह्म प्रयान्त्येते यज्ञशिष्टामृताशिनः।
अयज्ञकारिणो लोको नायमन्यः कुतो भवेत्॥ ३७॥

कायिकादित्रिधाभूतान्यज्ञान्वेदे प्रतिष्ठितान्।
ज्ञात्वा तानखिलान्भूप मोक्ष्यसेऽखिलबन्धनात्॥ ३८॥

सर्वेषां भूप यज्ञानां ज्ञानयज्ञः परो मतः।
अखिलं लीयते कर्म ज्ञाने मोक्षस्य साधने॥ ३९॥

तज्ज्ञेयं पुरुषव्याघ्र प्रश्नेन नतितः सताम्।
शुश्रूषया वदिष्यन्ति सन्तस्तत्त्वविशारदाः॥ ४०॥

नाना सङ्गाज्जनः कुर्वन्नेकं साधुसमागमम्।
करोति तेन संसारे बन्धनं समुपैति सः॥ ४१॥

सत्संगाद्गुणसम्भूतिरापदां लय एव च।
स्वहितं प्राप्यते सर्वैरिह लोके परत्र च॥ ४२॥

इतरत्सुलभं राजन्सत्संगोऽतीव दुर्लभः।
यं ज्ञात्वा न पुनर्बन्धमेति ज्ञेयं ततस्ततः॥ ४३॥

ततः सर्वाणि भूतानि स्वात्मन्येवाभिपश्यति।
अतिपापरतो जन्तुस्ततस्तस्मात्प्रमुच्यते॥ ४४॥

द्विविधान्यापि कर्माणि ज्ञानाग्निर्दहति क्षणात्।
प्रसिद्धोऽग्निर्यथा सर्वं भस्मतां नयति क्षणात्॥ ४५॥
न ज्ञानसमतामेति पवित्रमितरन्नृप।
आत्मन्येवावगच्छन्ति योगात्कालेन योगिनः॥ ४६॥
भक्तिमानिन्द्रियजयी तत्परो ज्ञानमाप्नुयात्।
लब्ध्वा तत्परमं मोक्षं स्वल्पकालेन यात्यसौ॥ ४७॥
भक्तिहीनोऽश्रद्दधानः सर्वत्र संशयी तु यः।
तस्य शं नापि विज्ञानमिह लोकोऽथ वा परः॥ ४८॥
आत्मज्ञानरतं ज्ञाननाशिताखिलसंशयम्।
योगास्ताखिलकर्माणं बध्नन्ति भूप तानि न॥ ४९॥
ज्ञानखड्गप्रहारेण सम्भूतामज्ञतां बलात्।
छित्त्वान्तःसंशयं तस्माद्योगयुक्तो भवेन्नरः॥ ५०॥

ॐ तत्सदिति श्रीमद्गणेशगीतासूपनिषदर्थगर्भासु योगामृतार्थशास्त्रे श्रीगणेशपुराणे उत्तरखण्डे श्रीमद्गजाननवरेण्यसंवादे विज्ञानप्रतिपादनं नाम तृतीयोऽध्यायः॥

## चतुर्थोऽध्यायः।

वरेण्य उवाच॥
संन्यस्तिश्चैव योगश्च कर्मणा वर्ण्यते त्वया।
उभयोर्निश्चितं त्वेकं श्रेयो यद्वद मे प्रभो॥ १॥
श्रीगजानन उवाच॥
क्रियायोगो वियोगश्चाप्युभौ मोक्षस्य साधने।
तयोर्मध्ये क्रियायोगस्त्यागात्तस्य विशिष्यते॥ २॥
द्वन्द्वदुःखसहोऽद्वेष्टा यो न काङ्क्षति किञ्चन।
मुच्यते बन्धनात्सद्यो नित्यं संन्यासवान्सुखम्॥ ३॥
वदन्ति भिन्नफलकौ कर्मणस्त्यागसंग्रहौ।
मूढाल्पज्ञास्तयोरेकं संयुञ्जीत विचक्षणः॥ ४॥

यदेव प्राप्यते त्यागात्तदेव योगतः फलम्।
संग्रहं कर्मणो योगं यो विन्दति स विन्दति ॥ ५ ॥
केवलं कर्मणां न्यासं संन्यासं न विदुर्बुधाः ।
कुर्वन्ननिच्छया कर्म योगी ब्रह्मैव जायते ॥ ६ ॥
निर्मलो यतचित्तात्मा जितखो योगतत्परः ।
आत्मानं सर्वभूतस्थं पश्यन्कुर्वन्न लिप्यते ॥ ७ ॥
तत्त्वविद्योगयुक्तात्मा करोमीति न मन्यते।
एकादशानीन्द्रियाणि कुर्वन्ति कर्मसंख्यया ॥ ८ ॥
तत्सर्वमर्पयेद्ब्रह्मण्यपि कर्म करोति यः ।
न लिप्यते पुण्यपापैर्भानुर्जलगतो यथा ॥ ९ ॥
कायिकं वाचिकं बौद्धमैन्द्रियं मानसं तथा।
त्यक्त्वाशां कर्म कुर्वन्ति योगज्ञाश्चित्तशुद्धये ॥ १० ॥
योगहीनो नरः कर्म फलेहया करोत्यलम्।
बध्यते कर्मबीजैः स ततो दुःखं समश्नुते ॥ ११ ॥
मनसा सकलं कर्म त्यक्त्वा योगी सुखं वसेत्।
न कुर्वन्कारयन्वापि नन्दन्श्वभ्रे सुपत्तने ॥ १२ ॥
न क्रिया न च कर्तृत्वं कस्यचित्सृज्यते मया।
न क्रियाबीजसम्पर्कः शक्त्या तत्क्रियतेऽखिलम् ॥ १३ ॥
कस्यचित्पुण्यपापानि न स्पृशामि विभुर्नृप।
ज्ञानमूढा विमुह्यन्ति मोहेनावृतबुद्धयः ॥ १४ ॥
विवेकेनात्मनोऽज्ञानं येषां नाशितमात्मना।
तेषां विकाशमायाति ज्ञानमादित्यवत्परम् ॥ १५ ॥
मन्निष्ठा मद्धियोऽत्यन्तं मच्चित्ता मयि तत्पराः ।
अपुनर्भवमायान्ति विज्ञानान्नाशितैनसः ॥ १६ ॥

ज्ञानविज्ञानसंयुक्ते द्विजे गवि गजादिषु ।
समेक्षणा महात्मानः पण्डिताः श्वपचे शुनि ॥ १७ ॥
वश्यः स्वर्गो जगत्तेषां जीवन्मुक्ताः समेक्षणाः ।
यतोऽदोषं ब्रह्म समं तस्मात्तैर्विषयीकृतम् ॥ १८ ॥
प्रियाप्रिये प्राप्य हर्षद्वेषौ ये प्राप्नुवन्ति न ।
ब्रह्माश्रिता असंमूढा ब्रह्मज्ञाः समबुद्धयः ॥ १९ ॥
वरेण्य उवाच ॥
किं सुखं त्रिषु लोकेषु देवगन्धर्वयोनिषु ।
भगवन्कृपया तन्मे वद विद्याविशारद ॥ २० ॥
श्रीगजानन उवाच ॥
आनन्दमश्नुतेऽसक्तः स्वात्मारामो निजात्मनि ।
अविनाशि सुखं तद्धि न सुखं विषयादिषु ॥ २१ ॥
विषयोत्थानि सौख्यानि दुःखानां तानि हेतवः ।
उत्पत्तिनाशयुक्तानि तत्रासक्तो न तत्त्ववित् ॥ २२ ॥
कारणे सति कामस्य क्रोधस्य सहते च यः ।
तौ जेतुं वर्ष्मविरहात्स सुखं चिरमश्नुते ॥ २३ ॥
अन्तर्निष्ठोऽन्तः प्रकाशोऽन्तः सुखोऽन्तर्रतिर्लभेत् ।
असन्दिग्धोऽक्षयं ब्रह्म सर्वभूतहितार्थकृत् ॥ २४ ॥
जेतारः षड्रिपूणां ये शमिनो दमिनस्तथा ।
तेषां समन्ततो ब्रह्म स्वात्मज्ञानां विभात्यहो ॥ २५ ॥
आसनेषु समासीनस्त्यक्त्वेमान्विषयान्बहिः ।
संस्तभ्य भ्रुकुटीमास्ते प्राणायामपरायणः ॥ २६ ॥
प्राणायामं तु संरोधं प्राणापानसमुद्भवम् ।
वदन्ति मुनयस्तं च त्रिधाभूतं विपश्चितः ॥ २७ ॥
प्रमाणं भेदतो विद्धि लघु मध्यममुत्तमम् ।
दशभिद्वर्यधिकैर्वर्णैः प्राणायामो लघुः स्मृतः ॥ २८ ॥

चतुर्विंशत्यक्षरो यो मध्यमः स उदाहृतः।
षट्त्रिंशल्लघुवर्णो य उत्तमः सोऽभिधीयते॥ २९॥
सिंहं शार्दूलकं वापि मत्तेभं मृदुतां यथा।
नयन्ति प्राणिनस्तद्वत्प्राणापानौ सुसाधयेत्॥ ३०॥
पीडयन्ति मृगांस्तेन लोकान्वश्यंगतान्नृप।
दहत्येनस्तथा वायुः संस्तब्धो न च तत्तनुम्॥ ३१॥
यथा यथा नरः कश्चित्सोपानावलिमाक्रमेत्।
तथा तथा वशीकुर्यात्प्राणापानौ हि योगवित्॥ ३२॥
पूरकं कुम्भकं चैव रेचकं च ततोऽभ्यसेत्।
अतीतानागतज्ञानी ततः स्याज्जगतीतले॥ ३३॥
प्राणायामैर्द्वादशभिरुत्तमैर्धारणा मता।
योगस्तु धारणे द्वे स्याद्योगीशस्ते सदाभ्यसेत्॥ ३४॥
एवं यः कुरुते राजंस्त्रिकालज्ञः स जायते।
अनायासेन तस्य स्याद्वश्यं लोकत्रयं नृप॥ ३५॥
ब्रह्मरूपं जगत्सर्वं पश्यति स्वान्तरात्मनि।
एवं योगश्च संन्यासः समानफलदायिनौ॥ ३६॥
जन्तूनां हितकर्तारं कर्मणां फलदायिनम्।
मां ज्ञात्वा मुक्तिमाप्नोति त्रैलोक्यस्येश्वरं विभुम्॥ ३७॥

ॐ तत्सदिति श्रीमद्गणेशगीतासूपनिषदर्थगर्भासु योगामृतार्थशास्त्रे श्रीगणेशपुराणे उत्तरखण्डे श्रीगजाननवरेण्यसंवादे वैधसंन्यासयोगो नाम चतुर्थोऽध्यायः॥

## पञ्चमोऽध्यायः

श्रीगजानन उवाच॥

श्रौतस्मार्तानि कर्माणि फलं नेच्छन्समाचरेत्।
शस्तः स योगी राजेन्द्र अक्रियाद्योगमाश्रितात्॥ १॥

योगप्राप्त्यै महाबाहो हेतुः कर्मैव मे मतम्।
सिद्धियोगस्य संसिद्ध्यै हेतू शमदमौ मतौ ॥ २ ॥
इन्द्रियार्थांश्च संकल्प्य कुर्वन्स्वस्य रिपुर्भवेत्।
एताननिच्छन्यः कुर्वन् सिद्धिं योगी स सिद्ध्यति ॥ ३ ॥
सुहृत्त्वे च रिपुत्वे च उद्धारे चैव बन्धने।
आत्मनैवात्मनो ह्यात्मानात्मा भवति कश्चन ॥ ४ ॥
मानेऽपमाने दुःखे च सुखे सुहृदि साधुषु।
मित्रेऽमित्रेऽप्युदासीने द्वेष्ये लोष्टे च काञ्चने ॥ ५ ॥
समो जितात्मा विज्ञानी ज्ञानीन्द्रियजयाग्रहः।
अभ्यसेत्सततं योगं यदा युक्ततमो हि सः ॥ ६ ॥
तप्तः श्रान्तो व्याकुलो वा क्षुधितो व्यग्रचित्तकः।
कालेऽतिशीतेऽत्युष्णे वानिलाग्न्यम्बुसमाकुले ॥ ७ ॥
सध्वनावतिजीर्णे गोःस्थाने साग्नौ जलान्तिके।
कूपकूले श्मशाने च नद्यां भित्तौ च मर्मरे ॥ ८ ॥
चैत्ये सवल्मिके देशे पिशाचादिसमावृते।
नाभ्यसेद्योगविद्योगं योगध्यानपरायणः ॥ ९ ॥
स्मृतिलोपश्च मूकत्वं बाधिर्यं मन्दता ज्वरः।
जडता जायते सद्यो दोषाज्ज्ञानाद्धि योगिनः ॥ १० ॥
एते दोषाः परित्याज्या योगाभ्यसनशालिना।
अनादरे हि चैतेषां स्मृतिलोपादयो ध्रुवम् ॥ ११ ॥
नातिभुञ्जन्सदा योगी नाभुञ्जन्नातिनिद्रितः।
नातिजाग्रत्सिद्धिमेति भूप योगं सदाभ्यसन् ॥ १२ ॥
संकल्पजांस्त्यजेत्कामान्नियताहारजागरः।
नियम्य खगणं बुद्ध्या विरमेत शनैः शनैः ॥ १३ ॥
ततस्ततः कृषेदेतद्यत्र यत्रानुगच्छति।
धृत्यात्मवशगं कुर्याच्चित्तं चञ्चलमादृतः ॥ १४ ॥

एवं कुर्वन्सदा योगी परां निर्वृतिमृच्छति।
विश्वस्मिन्निजमात्मानं विश्वं च स्वात्मनीक्षते ॥ १५ ॥
योगेन यो मामुपैति तमुपैम्यहमादरात्।
मोचयामि न मुञ्चामि तमहं मां स न त्यजेत् ॥ १६ ॥
सुखेऽसुखेतरे द्वेषे क्षुधि तोषे समस्तृषि।
आत्मसाम्येन भूतानि सर्वगं मां च वेत्ति यः ॥ १७ ॥
जीवन्मुक्तः स योगीन्द्रः केवलं मयि सङ्गतः।
ब्रह्मादीनां च देवानां स वन्द्यः स्याज्जगत्रये ॥ १८ ॥

वरेण्य उवाच ॥

द्विविधोऽपि हि योगोऽयमसम्भाव्यो हि मे मतः।
यतोऽन्तःकरणं दुष्टं चञ्चलं दुर्ग्रहं विभो ॥ १९ ॥

श्रीगजानन उवाच।

यो निग्रहं दुर्ग्रहस्य मनसः सम्प्रकल्पयेत्।
घटीयन्त्रसमादस्मान्मुक्तः संसृतिचक्रकात् ॥ २० ॥
विषयैः क्रकचैरेतत्संसृष्टं चक्रकं दृढम्।
जनश्छेत्तुं न शक्नोति कर्मकीलैः सुसंवृतम् ॥ २१ ॥
अतिदुःखं च वैराग्यं भोगाद्वैतृष्ण्यमेव च।
गुरुप्रसादः सत्सङ्ग उपायास्तज्जये अमी ॥ २२ ॥
अभ्यासाद्वा वशीकुर्यान्मनो योगस्य सिद्धये।
वरेण्य दुर्लभो योगो विनास्य मनसो जयात् ॥ २३ ॥

वरेण्य उवाच।

योगभ्रष्टस्य को लोकः का गतिः किं फलं भवेत्।
विभो सर्वज्ञ मे छिन्धि संशयं बुद्धिचक्रभृत् ॥ २४ ॥

श्रीगजानन उवाच।

दिव्यदेहधरो योगाद्भ्रष्टः स्वर्भोगमुत्तमम्।
भुक्त्वा योगिकुले जन्म लभेच्छुद्धिमतां कुले॥ २५॥
पुनर्योगी भवत्येष संस्कारात्पूर्वकर्मजात्।
न हि पुण्यकृतां कश्चिन्नरकं प्रतिपद्यते॥ २६॥
ज्ञाननिष्ठात्तपोनिष्ठात्कर्मनिष्ठान्नराधिप।
श्रेष्ठो योगी श्रेष्ठतमो भक्तिमान्मयि तेषु यः॥ २७॥

ॐ तत्सदिति श्रीमद्गणेशगीतासूपनिषदर्थगर्भासु योगामृतार्थशास्त्रे श्रीगणेशपुराणे उत्तरखण्डे गजाननवरेण्यसंवादे योगवृत्तिप्रशंसनं नाम पञ्चमोऽध्यायः॥

## षष्ठोऽध्यायः

श्रीगजानन उवाच।
ईदृशं विद्धि मे तत्त्वं मद्गतेनान्तरात्मना।
यज्ज्ञात्वा मामसंदिग्धं वेत्सि मोक्ष्यसि सर्वगम्॥ १॥
तत्तेऽहं शृणु वक्ष्यामि लोकानां हितकाम्यया।
अस्ति ज्ञेयं यतो नान्यन्मुक्तेश्च साधनं नृप॥ २॥
ज्ञेया मत्प्रकृतिः पूर्वं ततः स्यां ज्ञानगोचरः।
ततो विज्ञानसम्पत्तिर्मयि ज्ञाते नृणां भवेत्॥ ३॥
कनलौ खमहङ्कारः कं चित्तं धीसमीरणौ।
रवीन्दू यागकृच्चैकादशधा प्रकृतिर्मम॥ ४॥
अन्यां मत्प्रकृतिं वृद्धा मुनयः सङ्गिरन्ति च।
तया त्रिविष्टपं व्याप्तं जीवत्वं गतयानया॥ ५॥
आभ्यामुत्पाद्यते सर्वं चराचर मयं जगत्।
संगाद्विश्वस्य सम्भूतिः परित्राणं लयोऽप्यहम्॥ ६॥
तत्त्वमेतन्निबोद्धुं मे यतते कश्चिदेव हि।
वर्णाश्रमवतां पुंसां पुरा चीर्णेन कर्मणा॥ ७॥

साक्षात्करोति मां कश्चिद्यत्नवत्स्वपि तेषु च।
मत्तोऽन्यन्नेक्षते किञ्चिन्मयि सर्वं च वीक्षते॥ ८॥

क्षितौ सुगन्धरूपेण तेजोरूपेण चाग्निषु।
प्रभारूपेण पूष्णयब्जे रसरूपेण चाप्सु च॥ ९॥

धीतपोबलिनां चाहं धीस्तपोबलमेव च।
त्रिविधेषु विकारेषु मदुत्पन्नेष्वहं स्थितः॥ १०॥

न मां विन्दति पापीयान्मायामोहितचेतनः।
त्रिविकारा मोहयति प्रकृतिर्मे जगत्त्रयम्॥ ११॥

यो मे तत्त्वं विजानाति मोहं त्यजति सोऽखिलम्।
अनेकैर्जन्मभिश्चैवं ज्ञात्वा मां मुच्यते ततः॥ १२॥

अन्ये नानाविधान्देवान्भजन्ते तान्व्रजन्ति ते।
यथा यथा मतिं कृत्वा भजते मां जनोऽखिलः॥ १३॥

तथा तथास्य तं भावं पूरयाम्यहमेव तम्।
अहं सर्वं विजानामि मां न कश्चिद्विबुद्ध्यते॥ १४॥

अव्यक्तं व्यक्तिमापन्नं न विदुः काममोहिताः।
नाहं प्रकाशतां यामि अज्ञानां पापकर्मणाम्॥ १५॥

यः स्मृत्वा त्यजति प्राणमन्ते मां श्रद्धयान्वितः।
स यात्यपुनरावृत्तिं प्रसादान्मम भूभुज॥ १६॥

यं यं देवं स्मरन्भक्त्या त्यजति स्वं कलेवरम्।
तत्तत्सालोक्यमायाति तत्तद्भक्त्या नराधिप॥ १७॥

अतश्चाहर्निशं भूप स्मर्तव्योऽनेकरूपवान्।
सर्वेषामप्यहं गम्यः स्रोतसामर्णवो यथा॥ १८॥

ब्रह्मविष्णुशिवेन्द्राद्याँल्लोकान्प्राप्य पुनः पतेत्।
यो मामुपैत्यसंदिग्धः पतनं तस्य न कर्हिचित्॥ १९॥

अनन्यशरणो यो मां भक्त्या भजति भूमिप।
योगक्षेमौ च तस्याहं सर्वदा प्रतिपादये॥ २०॥

द्विविधा गतिरुद्दिष्टा शुक्ला कृष्णा नृणां नृप।
एकया परमं ब्रह्म परया याति संसृतिम्॥ २१॥

ॐ तत्सदिति श्रीमद्गणेशगीतासूपनिषदर्थगर्भासु योगामृतार्थशास्त्रे श्रीगणेशपुराणे उत्तरखण्डे श्रीगजाननवरेण्यसंवादे बुद्धियोगो नाम षष्ठोऽध्यायः॥

## सप्तमोऽध्यायः

वरेण्य उवाच॥
का शुक्ला गतिरुद्दिष्टा का च कृष्णा गजानन।
किं ब्रह्म संसृतिः का मे वक्तुमर्हस्यनुग्रहात्॥ १॥
श्रीगजानन उवाच।
अग्निर्ज्योतिरहः शुक्ला कर्मार्हमयनं गतिः।
चान्द्रं ज्योतिस्तथा धूमो रात्रिश्च दक्षिणायनम्॥ २॥
कृष्णैते ब्रह्मसंसृत्योरवाप्तेः कारणं गती।
दृश्यादृश्यमिदं सर्वं ब्रह्मैवेत्यवधारय॥ ३॥
क्षरं पञ्चात्मकं विद्धि तदन्तरक्षरं स्मृतम्।
उभाभ्यां यदतिक्रान्तं शुद्धं विद्धि सनातनम्॥ ४॥
अनेकजन्मसम्भूतिः संसृतिः परिकीर्तिता।
संसृतिं प्राप्नुवन्त्येते ये तु मां गणयन्ति न॥ ५॥
ये मां सम्यगुपासन्ते परं ब्रह्म प्रयान्ति ते।
ध्यानाद्यैरुपचारैर्मां तथा पञ्चामृतादिभिः॥ ६॥
स्नानवस्त्राद्यलङ्कारसुगन्धधूपदीपकैः।
नैवेद्यैः फलताम्बूलैर्दक्षिणाभिश्च योऽर्चयेत्॥ ७॥
भक्त्यैकचेतसा चैव तस्येष्टं पूरयाम्यहम्।
एवं प्रतिदिनं भक्त्या मद्भक्तो मां समर्चयेत्॥ ८॥

अथवा मानसीं पूजां कुर्वीत स्थिरचेतसा।
अथवा फलपत्राद्यैः पुष्पमूलजलादिभिः ॥ ९ ॥
पूजयेन्मां प्रयत्नेन तत्तदिष्टं फलं लभेत्।
त्रिविधास्वपि पूजासु श्रेयसी मानसी मता ॥ १० ॥
साप्युत्तमा मता पूजाऽनिच्छया या कृता मम।
ब्रह्मचारी गृहस्थो वा वानप्रस्थो यतिश्च यः ॥ ११ ॥
एकां पूजां प्रकुर्वाणोऽप्यन्यो वा सिद्धिमृच्छति।
मदन्यदेवं यो भक्त्या द्विषन्मामन्यदेवताम् ॥ १२ ॥
सोऽपि मामेव यजते परं त्वविधितो नृप।
यो ह्यन्यदेवतां मां च द्विषन्नन्यां समर्चयेत् ॥ १३ ॥
याति कल्पसहस्रं स निरयान्दुःखभाक् सदा।
भूतशुद्धिं विधायादौ प्राणानां स्थापनं ततः ॥ १४ ॥
आकृष्य चेतसो वृत्तिं ततो न्यासमुपक्रमेत्।
कृत्वान्तर्मातृकान्यासं बहिश्चाथ षडङ्गकम् ॥ १५ ॥
न्यासं च मूलमन्त्रस्य ततो ध्यात्वा जपेन्मनुम्।
स्थिरचित्तो जपेन्मन्त्रं यथा गुरुमुखागतम् ॥ १६ ॥
जपं निवेद्य देवाय स्तुत्वा स्तोत्रैरनेकधा।
एवं मां य उपासीत स लभेन्मोक्षमव्ययम् ॥ १७ ॥
य उपासनया हीनो धिङ्नरो व्यर्थजन्मभाक्।
यज्ञोऽहमौषधं मन्त्रोऽग्निराज्यं च हविर्हुतम् ॥ १८ ॥
ध्यानं ध्येयं स्तुतिः स्तोत्रं नतिर्भक्तिरुपासना।
त्रयी ज्ञेयं पवित्रं च पितामहपितामहः ॥ १९ ॥
ॐ कारः पावनः साक्षी प्रभुर्मित्रं गतिर्लयः।
उत्पत्तिः पोषको बीजं शरणं वास एव च ॥ २० ॥

असन्मृत्युः सदमृतमात्मा ब्रह्माहमेव च।
दानं होमस्तपो भक्तिर्जपः स्वाध्याय एव च॥ २१॥
यद्यत्करोति तत्सर्वं स मे मयि निवेदयेत्।
योषितोऽथ दुराचाराः पापास्त्रैवर्णिकास्तथा॥ २२॥
मदाश्रया विमुच्यन्ते किं मद्भक्त्या द्विजादयः।
न विनश्यति मद्भक्तो ज्ञात्वेमा मद्विभूतयः॥ २३॥
प्रभवं मे विभूतीश्च न देवा ऋषयो विदुः।
नानाविभूतिभिरहं व्याप्य विश्वं प्रतिष्ठितः॥ २४॥
यद्यच्छ्रेष्ठतमं लोके सा विभूतिर्निबोध मे॥ २५॥

ॐ तत्सदिति श्रीमद्गणेशगीतासूपनिषदर्थगर्भासु योगामृतार्थशास्त्रे श्रीगणेशपुराणे उत्तरखण्डे श्रीगजाननवरेण्यसंवादे उपासनायोगो नाम सप्तमोऽध्यायः।

## अष्टमोऽध्यायः

वरेण्य उवाच।
भगवन्नारदो मह्यं तव नानाविभूतयः।
उक्तवांस्ता अहं वेद न सर्वाः सोऽपि वेत्ति ताः॥ १॥
त्वमेव तत्त्वतः सर्वा वेत्सि ता द्विरदानन।
निजं रूपमिदानीं मे व्यापकं चारु दर्शय॥ २॥
श्रीगजानन उवाच।
एकस्मिन्मयि पश्य त्वं विश्वमेतच्चराचरम्।
नानाश्चर्याणि दिव्यानि पुरा दृष्टानि केनचित्॥ ३॥
ज्ञानचक्षुरहं तेऽद्य सृजामि स्वप्रभावतः।
चर्मचक्षुः कथं पश्येन्मां विभुं ह्यजमव्ययम्॥ ४॥
व्यास उवाच॥
ततो राजा वरेण्यः स दिव्यचक्षुरवैक्षत।
ईशितुः परमं रूपं गजास्यस्य महाद्भुतम्॥ ५॥

असंख्यवक्त्रं ललितमसंख्याङ्घ्रिकरं महत्।
अनुलिप्तं सुगन्धेन दिव्यभूषाम्बरस्रजम्॥ ६॥
असंख्यनयनं कोटिसूर्यरश्मिधृतायुधम्।
तद्वर्ष्मणि त्रयो लोका दृष्टास्तेन पृथग्विधाः॥ ७॥
दृष्ट्वैश्वरं परं रूपं प्रणम्य स नृपोऽब्रवीत्।
वरेण्य उवाच॥
वीक्षेऽहं तव देहेऽस्मिन्देवानृषिगणान्पितॄन्॥ ८॥
पातालानां समुद्राणां द्वीपानां चैव भूभृताम्।
महर्षीणां सप्तकं च नानार्थैः सङ्कुलं विभो॥ ९॥
भुवोऽन्तरिक्षं स्वर्गांश्च मनुष्योरगराक्षसान्।
ब्रह्मविष्णुमहेशेन्द्रान्देवान्जन्तूननेकधा॥ १०॥
अनाद्यनन्तं लोकादिमनन्तभुजशीर्षकम्।
प्रदीप्तानलसङ्काशमप्रमेयं पुरातनम्॥ ११॥
किरीटकुण्डलधरं दुर्निरीक्ष्यं मुदावहम्।
एतादृशं च वीक्षे त्वां विशालवक्षसं प्रभुम्॥ १२॥
सुरविद्याधरैर्यक्षैः किन्नरैर्मुनिमानुषैः।
नृत्यद्भिरप्सरोभिश्च गन्धर्वैर्गानतत्परैः॥ १३॥
वसुरुद्रादित्यगणैः सिद्धैः साध्यैर्मुदा युतैः।
सेव्यमानं महाभक्त्या वीक्ष्यमाणं सुविस्मितैः॥ १४॥
वेत्तारमक्षरं वेद्यं धर्मगोप्तारमीश्वरम्।
पातालानि दिशः स्वर्गान्भुवं व्याप्याखिलं स्थितम्॥ १५॥
भीता लोकास्तथा चाहमेवं त्वां वीक्ष्य रूपिणम्।
नानादंष्ट्राकरालं च नानाविद्याविशारदम्॥ १६॥
प्रलयानलदीप्तास्यं जटिलं च नभःस्पृशम्।
दृष्ट्वा गणेश ते रूपमहं भ्रान्त इवाभवम्॥ १७॥

देवा मनुष्या नागाद्याः खलास्त्वबुदरेशयाः ।
नानायोनिभुजश्चान्ते त्वय्येव प्रविशन्ति च ॥ १८ ॥
अब्धेरुत्पद्यमानास्ते यथा जीमूतबिन्दवः ।
त्वमिन्द्रोऽग्निर्यमश्चैव निर्ऋतिर्वरुणो मरुत् ॥ १९ ॥
गुडाकेशस्तथेशानः सोमः सूर्योऽखिलं जगत् ।
नमामि त्वामतः स्वामिन्प्रसादं कुरु मेऽधुना ॥ २० ॥
दर्शयस्व निजं रूपं सौम्यं यत्पूर्वमीक्षितम् ।
को वेद लीलास्ते भूमन् क्रियमाणा निजेच्छया ॥ २१ ॥
अनुग्रहान्मया दृष्टमैश्वरं रूपमीदृशम् ।
ज्ञानचक्षुर्यतो दत्तं प्रसन्नेन त्वया मम ॥ २२ ॥
श्रीगजानन उवाच ।
नेदं रूपं महाबाहो मम पश्यन्त्ययोगिनः ।
सनकाद्या नारदाद्याः पश्यन्ति मदनुग्रहात् ॥ २३ ॥
चतुर्वेदार्थतत्त्वज्ञाश्चतुःशास्त्रविशारदाः ।
यज्ञदानतपोनिष्ठा न मे रूपं विदन्ति ते ॥ २४ ॥
शक्योऽहं वीक्षितुं ज्ञातुं प्रवेष्टुं भक्तिभावतः ।
त्यज भीतिं च मोहं च पश्य मां सौम्यरूपिणम् ॥ २५ ॥
मद्भक्तो मत्परः सर्वसङ्गहीनो मदर्थकृत् ।
निष्क्रोधः सर्वभूतेषु समो मामेति भूभुज ॥ २६ ॥

ॐ तत्सदिति श्रीमद्गणेशगीतासूपनिषदर्थगर्भासु योगामृतार्थशास्त्रे श्रीगणेशपुराणे उत्तरखण्डे श्रीगजाननवरेण्यसंवादे विश्वरूपदर्शनं नाम अष्टमोऽध्यायः ॥

## नवमोऽध्यायः

वरेण्य उवाच ।
अनन्यभावस्त्वां सम्यङ्मूर्तिमन्तमुपासते ।
योऽक्षरं परमं व्यक्तं तयोः कस्ते मतोऽधिकः ॥ १ ॥

असि त्वं सर्ववित्साक्षी भूतभावन ईश्वरः ।
अतस्त्वां परिपृच्छामि वद मे कृपया विभो ॥ २ ॥

श्रीगजानन उवाच ।

यो मां मूर्तिधरं भक्त्या मद्भक्तः परिसेवते ।
स मे मान्योऽनन्यभक्तिर्नियुज्य हृदयं मयि ॥ ३ ॥
खगणं स्ववशं कृत्वाखिलभूतहितार्थकृत् ।
ध्येयमक्षरमव्यक्तं सर्वगं कूटगं स्थिरम् ॥ ४ ॥
सोऽपि मामेत्यनिर्देश्यं मत्परो य उपासते ।
संसारसागरादस्मादुद्धरामि तमप्यहम् ॥ ५ ॥
अव्यक्तोपासनाद् दुःखमधिकं तेन लभ्यते ।
व्यक्तस्योपासनं साध्यं तदेवाव्यक्तभक्तितः ॥ ६ ॥
भक्तिश्चैवादरश्चात्र कारणं परमं मतम् ।
सर्वेषां विदुषां श्रेष्ठो ह्यकिञ्चिज्ज्ञोऽपि भक्तिमान् ॥ ७ ॥
भजन्भक्त्या विहीनो यः स चाण्डालोऽभिधीयते ।
चाण्डालोऽपि भजन्भक्त्या ब्राह्मणेभ्योऽधिको मम ॥ ८ ॥
शुकाद्याः सनकाद्याश्च पुरा मुक्ता हि भक्तितः ।
भक्त्यैव मामनुप्राप्ता नारदाद्याश्चिरायुषः ॥ ९ ॥
अतो भक्त्या मयि मनो निधेहि बुद्धिमेव च ।
भक्त्या यजस्व मां राजंस्ततो मामेव यास्यसि ॥ १० ॥
असमर्थोऽर्पितुं स्वान्तमेवं मयि नराधिप ।
अभ्यासेन च योगेन ततो गन्तुं यतस्व माम् ॥ ११ ॥
तत्रापि त्वमशक्तश्चेत्कुरु कर्म मदर्पणम् ।
ममानुग्रहतश्चैवं परां निर्वृतिमेष्यसि ॥ १२ ॥
अथैतदप्यनुष्ठातुं न शक्तोऽसि तदा कुरु ।
प्रयत्नतः फलत्यागं त्रिविधानां हि कर्मणाम् ॥ १३ ॥

श्रेयसी बुद्धिरावृत्तेस्ततो ध्यानं परं मतम्।
ततोऽखिलपरित्यागस्ततः शान्तिर्गरीयसी॥ १४॥
निरहंममताबुद्धिरद्वेषः करुणा समः।
लाभालाभे सुखे दुःखे मानामाने स मे प्रियः॥ १५॥
यं वीक्ष्य न भयं याति जनस्तस्मान्न च स्वयम्।
उद्वेगभीकोपमुद्भी रहितो यः स मे प्रियः॥ १६॥
रिपौ मित्रेऽथ गर्हायां स्तुतौ शोके समः समुत्।
मौनी निश्चलधीभक्तिरसङ्गः स च मे प्रियः॥ १७॥
संशीलयति यश्चैनमुपदेशं मया कृतम्।
स वन्द्यः सर्वलोकेषु मुक्तात्मा मे प्रियः सदा॥ १८॥
अनिष्टाप्तौ च न द्वेष्टीष्टप्राप्तौ न च तुष्यति।
क्षेत्रतज्ज्ञौ च यो वेत्ति स मे प्रियतमो भवेत्॥ १९॥
वरेण्य उवाच।
किं क्षेत्रं कश्च तद्वेत्ति किं तज्ज्ञानं गजानन।
एतदाचक्ष्व मह्यं त्वं पृच्छते करुणाम्बुधे॥ २०॥
श्रीगजानन उवाच।
पञ्च भूतानि तन्मात्राः पञ्च कर्मेन्द्रियाणि च।
अहङ्कारो मनो बुद्धिः पञ्च ज्ञानेन्द्रियाणि च॥ २१॥
इच्छाव्यक्तं धृतिद्वेषौ सुखदुःखे तथैव च।
चेतनासहितश्चायं समूहः क्षेत्रमुच्यते॥ २२॥
तज्ज्ञं त्वं विद्धि मां भूप सर्वान्तर्यामिणं विभुम्।
अयं समूहोऽहं चापि यज्ज्ञानविषयौ नृप॥ २३॥
आर्जवं गुरुशुश्रूषा विरक्तिश्चेन्द्रियार्थतः।
शौचं क्षान्तिरदम्भश्च जन्मादिदोषवीक्षणम्॥ २४॥

समदृष्टिर्दृढा भक्तिरेकान्तित्वं शमो दमः ।
एतैर्यच्च युतं ज्ञानं तज्ज्ञानं विद्धि बाहुज ॥ २५ ॥

तज्ज्ञानविषयं राजन्ब्रवीमि त्वं शृणुष्व मे ।
यज्ज्ञात्वैति च निर्वाणं मुक्त्वा संसृतिसागरम् ॥ २६ ॥

यदनादीन्द्रियैर्हीनं गुणभुग्गुणवर्जितम् ।
अव्यक्तं सदसद्भिन्नमिन्द्रियार्थावभासकम् ॥ २७ ॥

विश्वभृच्चाखिलव्यापि त्वेकं नानेव भासते ।
बाह्याभ्यन्तरतः पूर्णमसङ्गं तमसः परम् ॥ २८ ॥

दुर्ज्ञेयं चातिसूक्ष्मत्वाद्दीप्तानामपि भासकम् ।
ज्ञेयमेतादृशं विद्धि ज्ञानगम्यं पुरातनम् ॥ २९ ॥

एतदेव परं ब्रह्म ज्ञेयमात्मा परोऽव्ययः ।
गुणान्प्रकृतिजान्भुङ्क्ते पुरुषः प्रकृतेः परः ॥ ३० ॥

गुणैस्त्रिभिरियं देहे बध्नाति पुरुषं दृढम् ।
यदा प्रकाशः शान्तिश्च वृद्धे सत्त्वे तदाधिकम् ॥ ३१ ॥

लोभोऽशमः स्पृहारम्भः कर्मणां रजसो गुणः ।
मोहोऽप्रवृत्तिश्चाज्ञानं प्रमादस्तमसो गुणः ॥ ३२ ॥

सत्त्वाधिकः सुखं ज्ञानं कर्मसङ्गो रजोऽधिकः ।
तमोऽधिकश्च लभते निद्रालस्यं सुखेतरत् ॥ ३३ ॥

एषु त्रिषु प्रवृद्धेषु मुक्तिसंसृतिदुर्गतीः ।
प्रयान्ति मानवा राजंस्तस्मात्सत्त्वयुतो भव ॥ ३४ ॥

ततश्च सर्वभावेन भज त्वं मां नरेश्वर ।
भक्त्या चाव्यभिचारिण्या सर्वत्रैव च संस्थितम् ॥ ३५ ॥

अग्नौ सूर्ये तथा सोमे यच्च तारासु संस्थितम् ।
विदुषि ब्राह्मणे तेजो विद्धि तन्मामकं नृप ॥ ३६ ॥

अहमेवाखिलं विश्वं सृजामि विसृजामि च।
ओषधीस्तेजसा सर्वा विश्वं चाप्याययाम्यहम् ॥ ३७ ॥
सर्वेन्द्रियाण्यधिष्ठाय जाठरं च धनंजयम्।
भुनज्मि चाखिलान्भोगान्पुण्यपापविवर्जितः ॥ ३८ ॥
अहं विष्णुश्च रुद्रश्च ब्रह्मा गौरी गणेश्वरः।
इन्द्राद्या लोकपालाश्च ममैवांशसमुद्भवाः ॥ ३९ ॥
येन येन हि रूपेण जनो मां पर्युपासते।
तथा तथा दर्शयामि तस्मै रूपं सुभक्तितः ॥ ४० ॥
इति क्षेत्रं तथा ज्ञाता ज्ञानं ज्ञेयं मयेरितम्।
अखिलं भूपते सम्यगुपपन्नाय पृच्छते ॥ ४१ ॥

ॐ तत्सदिति श्रीमद्गणेशगीतासूपनिषदर्थगर्भासु योगामृतार्थशास्त्रे श्रीगणेशपुराणे उत्तरखण्डे श्रीगजाननवरेण्यसंवादे ज्ञेयविवेकयोगो नाम नवमोऽध्यायः ॥

## दशमोऽध्यायः

श्रीगजानन उवाच।
दैव्यासुरी राक्षसी च प्रकृतिस्त्रिविधा नृणाम्।
तासां फलानि चिह्नानि संक्षेपात्तेऽधुना ब्रुवे ॥ १ ॥
आद्या संसाधयेन्मुक्तिं द्वे परे बन्धनं नृप।
चिह्नं ब्रवीमि चाद्यायास्तन्मे निगदतः शृणु ॥ २ ॥
अपैशुन्यं दया क्रोधश्चापल्यं धृतिरार्जवम्।
तेजोऽभयमहिंसा च क्षमा शौचममानिता ॥ ३ ॥
इत्यादिचिह्नमाद्याया आसुर्याः शृणु सांप्रतम्।
अतिवादोऽभिमानश्च दर्पोऽज्ञानं सकोपता ॥ ४ ॥
आसुर्या एवमाद्यानि चिह्नानि प्रकृतेर्नृप।
निष्ठुरत्वं मदो मोहोऽहङ्कारो गर्व एव च ॥ ५ ॥

द्वेषो हिंसाऽदया क्रोध औद्धत्यं दुर्विनीतता।
आभिचारिककर्तृत्वं क्रूरकर्मरतिस्तथा॥ ६॥

अविश्वासः सतां वाक्येऽशुचित्वं कर्महीनता।
निन्दकत्वं च वेदानां भक्तानामसुरद्विषाम्॥ ७॥

मुनिश्रोत्रियविप्राणां तथा स्मृतिपुराणयोः।
पाखण्डवाक्ये विश्वासः सङ्गतिर्मलिनात्मनाम्॥ ८॥

सदम्भकर्मकर्तृत्वं स्पृहा च परवस्तुषु।
अनेककामनावत्त्वं सर्वदाऽनृतभाषणम्॥ ९॥

परोत्कर्षासहिष्णुत्वं परकृत्यपराहतिः।
इत्याद्या बहवश्चान्ये राक्षस्याः प्रकृतेर्गुणाः॥ १०॥

पृथिव्यां स्वर्गलोके च परिवृत्य वसन्ति ते।
मद्भक्तिरहिता लोका राक्षसीं प्रकृतिं श्रिताः॥ ११॥

तामसीं ये श्रिता राजन्यान्ति ते रौरवं ध्रुवम्।
अनिर्वाच्यं च ते दुःखं भुञ्जते नात्र संस्थिताः॥ १२॥

देवान्निसृत्य नरकाज्जायन्ते भुवि कुब्जकाः।
जात्यन्धाः पङ्गवो दीना हीनजातिषु ते नृप॥ १३॥

पुनः पापसमाचारा मय्यभक्ताः पतन्ति ते।
उत्पतन्ति हि मद्भक्ता यां काञ्चिद्योनिमाश्रिताः॥ १४॥

लभन्ते स्वर्गतिं यज्ञैरन्यैर्धर्मैश्च भूमिप।
सुलभास्ताः सकामानां मयि भक्तिः सुदुर्लभा॥ १५॥

विमूढा मोहजालेन बद्धाः स्वेन च कर्मणा।
अहं हन्ता अहं कर्ता अहं भोक्तेति वादिनः॥ १६॥

अहमेवेश्वरः शास्ता अहं वेत्ता अहं सुखी।
एतादृशी मतिर्नॄणामधः पातयतीह तान्॥ १७॥

तस्मादेतत्समुत्सृज्य दैवीं प्रकृतिमाश्रय।
भक्तिं कुरु मदीयां त्वमनिशं दृढचेतसा॥ १८॥
सापि भक्तिस्त्रिधा राजन् सात्त्विकी राजसीतरा।
यद्देवान्भजते भक्त्या सात्त्विकी सा मता शुभा॥ १९॥
राजसी सा तु विज्ञेया भक्तिर्जन्ममृतिप्रदा।
यद्यक्षांश्चैव रक्षांसि यजन्ते सर्वभावतः॥ २०॥
वेदेनाविहितं क्रूरं साहङ्कारं सदम्भकम्।
भजन्ते प्रेतभूतादीन्कर्म कुर्वन्ति कामुकम्॥ २१॥
शोषयन्तो निजं देहमन्तःस्थं मां दृढाग्रहाः।
तामस्येतादृशी भक्तिर्नृणां सा निरयप्रदा॥ २२॥
कामो लोभस्तथा क्रोधो दम्भश्चत्वार इत्यमी।
महाद्वाराणि वीचीनां तस्मादेतांस्तु वर्जयेत्॥ २३॥

ॐ तत्सदिति श्रीमद्गणेशगीतासूपनिषदर्थगर्भासु योगामृतार्थशास्त्रे श्रीगणेशपुराणे उत्तरखण्डे श्रीगजाननवरेण्यसंवादे उपदेशयोगो नाम दशमोऽध्यायः॥

## एकादशोऽध्यायः।

श्रीगजानन उवाच॥
तपोऽपि त्रिविधं राजन्कायिकादिप्रभेदतः।
ऋजुतार्जवशौचानि ब्रह्मचर्यमहिंसनम्॥ १॥
गुरुविज्ञद्विजातीनां पूजनं चासुरद्विषाम्।
स्वधर्मपालनं नित्यं कायिकं तप ईदृशम्॥ २॥
मर्मास्पृक्च प्रियं वाक्यमनुद्वेगं हितं ऋतम्।
अधीतिर्वेदशास्त्राणां वाचिकं तप ईदृशम्॥ ३॥
अन्तःप्रसादः शान्तत्वं मौनमिन्द्रियनिग्रहः।
निर्मलाशयता नित्यं मानसं तप ईदृशम्॥ ४॥

अकामतः श्रद्धया च यत्तपः सात्त्विकं च तत्।
ऋद्ध्यै सत्कारपूजार्थं सदम्भं राजसं तपः ॥ ५ ॥
तदस्थिरं जन्ममृती प्रयच्छति न संशयः।
परात्मपीडकं यच्च तपस्तामसमुच्यते ॥ ६ ॥
विधिवाक्यप्रमाणार्थं सत्पात्रे देशकालतः।
श्रद्धया दीयमानं यद्दानं तत्सात्त्विकं मतम् ॥ ७ ॥
उपकारं फलं वापि काङ्क्षद्भिर्दीयते नरैः।
क्लेशतो दीयमानं वा भक्त्या राजसमुच्यते ॥ ८ ॥
अकालदेशतोऽपात्रेऽवज्ञया दीयते तु यत्।
असत्काराच्च यद्दत्तं तद्दानं तामसं स्मृतम् ॥ ९ ॥
ज्ञानं च त्रिविधं राजन् शृणुष्व स्थिरचेतसा।
त्रिधा कर्म च कर्तारं ब्रवीमि ते प्रसङ्गतः ॥ १० ॥
नानाविधेषु भूतेषु मामेकं वीक्षते तु यः।
नाशवत्सु च नित्यं मां तज्ज्ञानं सात्त्विकं नृप ॥ ११ ॥
तेषु वेत्ति पृथग्भूतं विविधं भावमाश्रितः।
मामव्ययं च तज्ज्ञानं राजसं परिकीर्तितम् ॥ १२ ॥
हेतुहीनमसत्यं च देहात्मविषयं च यत्।
असदल्पार्थविषयं तामसं ज्ञानमुच्यते ॥ १३ ॥
भेदतस्त्रिविधं कर्म विद्धि राजन्मयेरितम्।
कामनाद्वेषदम्भैर्यद्रहितं नित्यकर्म यत् ॥ १४ ॥
कृतं विना फलेच्छां यत्कर्म सात्त्विकमुच्यते।
यद्बहुक्लेशतः कर्म कृतं यच्च फलेच्छया ॥ १५ ॥
क्रियमाणं नृभिर्दम्भात्कर्म राजसमुच्यते।
अनपेक्ष्य स्वशक्तिं यदर्थक्षयकरं च यत् ॥ १६ ॥

अज्ञानात्क्रियमाणं यत्कर्म तामसमीरितम्।
कर्तारं त्रिविधं विद्धि कथ्यमानं मया नृप॥ १७॥
धैर्योत्साही समोऽसिद्धौ सिद्धौ चाविक्रियस्तु यः।
अहङ्कारविमुक्तो यः स कर्ता सात्त्विको नृप॥ १८॥
कुर्वन्हर्षं च शोकं च हिंसां फलस्पृहां च यः।
अशुचिर्लुब्धको यश्च राजसोऽसौ निगद्यते॥ १९॥
प्रमादाज्ञानसहितः परोच्छेदपरः शठः।
अलसस्तर्कवान्यस्तु कर्ताऽसौ तामसो मतः॥ २०॥
सुखं च त्रिविधं राजन्दुःखं च क्रमतः शृणु।
सात्त्विकं राजसं चैव तामसं च मयोच्यते॥ २१॥
विषवद्भासते पूर्वं दुःखस्यान्तकरं च यत्।
इच्छ्यमानं तथा वृत्त्या यदन्तेऽमृतवद्भवेत्॥ २२॥
प्रसादात्स्वस्य बुद्धेर्यत्सात्त्विकं सुखमीरितम्।
विषयाणां तु यो भोगो भासतेऽमृतवत्पुरा॥ २३॥
हालाहलमिवान्ते यद्राजसं सुखमीरितम्।
तन्द्रिप्रमादसम्भूतमालस्यप्रभवं च यत्॥ २४॥
सर्वदा मोहकं स्वस्य सुखं तामसमीदृशम्।
न तदस्ति यदेतैर्यन्मुक्तं स्यात् त्रिविधैर्गुणैः॥ २५॥
राजन्ब्रह्मापि त्रिविधमोंतत्सदिति भेदतः।
त्रिलोकेषु त्रिधा भूतमखिलं भूप वर्तते॥ २६॥
ब्रह्मक्षत्रियविट्शूद्राः स्वभावाद्भिन्नकर्मिणः।
तानि तेषां तु कर्माणि संक्षेपात्तेऽधुना वदे॥ २७॥
अन्तर्बाह्येन्द्रियाणां च वश्यत्वमार्जवं क्षमा।
नानातपांसि शौचं च द्विविधं ज्ञानमात्मनः॥ २८॥

वेदशास्त्रपुराणानां स्मृतीनां ज्ञानमेव च।
अनुष्ठानं तदर्थानां कर्म ब्राह्ममुदाहृतम्॥ २९॥

दाढर्चं शौर्यं च दाक्ष्यं च युद्धे पृष्ठाप्रदर्शनम्।
शरण्यपालनं दानं धृतिस्तेजः स्वभावजम्॥ ३०॥

प्रभुता मन औन्नत्यं सुनीतेर्लोकपालनम्।
पञ्चकर्माधिकारित्वं क्षात्रं कर्म समीरितम्॥ ३१॥

नानावस्तुक्रयो भूमेः कर्षणं रक्षणं गवाम्।
त्रिधा कर्माधिकारित्वं वैश्यकर्म समीरितम्॥ ३२॥

दानं द्विजानां शुश्रूषा सर्वदा शिवसेवनम्।
एतादृशं नरव्याघ्र कर्म शौद्रमुदीरितम्॥ ३३॥

स्वस्वकर्मरता एते मय्यर्प्याखिलकारिणः।
मत्प्रसादात्स्थिरं स्थानं यान्ति ते परमं नृप॥ ३४॥

इति ते कथितो राजन्प्रसादाद्योग उत्तमः।
साङ्गोपाङ्गः सविस्तारोऽनादिसिद्धो मया प्रिय॥ ३५॥

युङ्क्ष्व योगं मयाख्यातं नाख्यातं कस्यचिन्नृप।
गोपयैनं ततः सिद्धिं परां यास्यस्यनुत्तमाम्॥ ३६॥

व्यास उवाच।

इति तस्य वचः श्रुत्वा प्रसन्नस्य महात्मनः।
गणेशस्य वरेण्यः स चकार च यथोदितम्॥ ३७॥

त्यक्त्वा राज्यं कुटुम्बं च कान्तारं प्रययौ रथात्।
उपदिष्टं यथा योगमास्थाय मुक्तिमाप्तवान्॥ ३८॥

इमं गोप्यतमं योगं शृणोति श्रद्धया तु यः।
सोऽपि कैवल्यमाप्नोति यथा योगी तथैव सः॥ ३९॥

य इमं श्रावयेद्योगं कृत्वाऽस्वार्थं सुबुद्धिमान्।
यथा योगी तथा सोऽपि परं निर्वाणमृच्छति॥ ४०॥

यो गीतां सम्यगभ्यस्य ज्ञात्वा चार्थं गुरोर्मुखात्।
कृत्वा पूजां गणेशस्य प्रत्यहं पठते तु यः ॥ ४१ ॥
एककालं द्विकालं वा त्रिकालं वापि यः पठेत्।
ब्रह्मीभूतस्य तस्यापि दर्शनान्मुच्यते नरः ॥ ४२ ॥
न यज्ञैर्न व्रतैर्दानैर्नाग्निहोत्रैर्महाधनैः।
न वेदैः सम्यगभ्यस्तैः सम्यग्ज्ञातैः सहाङ्गकैः ॥ ४३ ॥
पुराणश्रवणैर्नैश्च न शास्त्रैः साधु चिन्तितैः।
प्राप्यते ब्रह्म परमनया प्राप्यते नरः ॥ ४४ ॥
ब्रह्मघ्नो मद्यपः स्तेयी गुरुतल्पगमोऽपि यः।
चतुर्णां यस्तु संसर्गी महापातक कारिणाम्॥ ४५ ॥
स्त्रीहिंसागोवधादीनां कर्तारो ये च पापिनः।
ते सर्वे प्रतिमुच्यन्ते गीतामेतां पठन्ति चेत्॥ ४६ ॥
यः पठेत्प्रयतो नित्यं स गणेशो न संशयः।
चतुर्थ्यां यः पठेद्भक्त्या सोऽपि मोक्षाय कल्पते ॥ ४७ ॥
तत्तत्क्षेत्रं समासाद्य स्नात्वाभ्यर्च्य गजाननम्।
सकृद्गीतां पठन्भक्त्या ब्रह्मभूयाय कल्पते ॥ ४८ ॥
भाद्रे मासि सिते पक्षे चतुर्थ्यां भक्तिमान्नरः।
कृत्वा महीमयीं मूर्तिं गणेशस्य चतुर्भुजाम्॥ ४९ ॥
सवाहनां सायुधां च समभ्यर्च्य यथाविधि।
यः पठेत्सप्तकृत्वस्तु गीतामेतां प्रयत्नतः ॥ ५० ॥
ददाति तस्य सन्तुष्टो गणेशो भोगमुत्तमम्।
पुत्रान्पौत्रान्धनं धान्यं पशुरत्नादिसम्पदः ॥ ५१ ॥
विद्यार्थिनो भवेद्विद्या सुखार्थी सुखमाप्नुयात्।
कामानन्यॉंल्लभेत्कामी मुक्तिमन्ते प्रयाति ते ॥ ५२ ॥

इति श्रीगणेशपुराणे श्रीमद्गणेशगीतासूपनिषदर्थगर्भासु योगामृतार्थशास्त्रे श्रीगजाननवरेण्यसंवादे त्रिविधवस्तुविवेकनिरूपणं नामैकादशोऽध्यायः ॥ ११ ॥ श्रीगजाननार्पणमस्तु ॥

# पूजाविधानम्

## आदौ विघ्नेश्वर पूजा

(चिकीर्षितस्य कर्मणः निर्विघ्नेन परिसमाप्त्यर्थं
हरिद्राबिम्बे क्रियमाणा पूजा)

ओं वक्रतुण्ड महाकाय सूर्यकोटिसमप्रभ।
अविघ्नं कुरु मे देव सर्वका र्येषु सर्वदा॥

श्रीगुरुभ्यो नमः।

शुक्लांबरधरं विष्णुं शशिवर्णं चतुर्भुजम्।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये॥

प्राणायामः। करिष्यमाणस्य कर्मणो निर्विघ्नेन परिसमाप्त्यर्थं आदौ विघ्नेश्वर पूजां करिष्ये (अप उपस्पृश्य)

*गणानां त्वा गणपतिं हवामहे कविं कवीनां उपमश्रवस्तमम्। ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम्। अस्मिन् हरिद्राबिम्बे सुमुखं विघ्नेश्वरं ध्यायामि। आवाहयामि। (सर्वत्र आदौ ओमिति प्रणवो योज्यः।)
सुमुखाय विघ्नेश्वराय नमः आसनं समर्पयामि।
सुमुखाय विघ्नेश्वराय नमः पाद्यं समर्पयामि।
सुमुखाय विघ्नेश्वराय नमः अर्घ्यं समर्पयामि।
सुमुखाय विघ्नेश्वराय नमः आचमनीयं समर्पयामि।
सुमुखाय विघ्नेश्वराय नमः मधुपर्कं समर्पयामि।
सुमुखाय विघ्नेश्वराय नमः स्नपयामि। स्नानानन्तरं आचमनीयं समर्पयामि।
सुमुखाय विघ्नेश्वराय नमः वस्त्राणि धारयामि।
सुमुखाय विघ्नेश्वराय नमः उपवीतं समर्पयामि।

सुमुखाय विघ्नेश्वराय नमः आभरणानि समर्पयामि।

सुमुखाय विघ्नेश्वराय नमः गन्धान्धारयामि। गन्धोपरि हरिद्राकुङ्कुमं समर्पयामि।

सुमुखाय विघ्नेश्वराय नमः अक्षतान् समर्पयामि।

सुमुखाय विघ्नेश्वराय नमः पुष्पैः पूजयामि।

ओं सुमुखाय नमः। ओं एकदन्ताय नमः। ओं कपिलाय नमः। ओं गजकर्णकाय नमः। ओं लम्बोदराय नमः। ओं विकटाय नमः। ओं विघ्नराजाय नमः। ओं विनायकाय नमः। ओं धूमकेतवे नमः। ओं गणाध्यक्षाय नमः। ओं फालचन्द्राय नमः। ओं गजाननाय नमः। ओं वक्रतुण्डाय नमः। ओं शूर्पकर्णाय नमः। ओं हेरम्बाय नमः। ओं स्कन्दपूर्वजाय नमः। ओं विघ्नेश्वराय नमः।

सुमुखाय विघ्नेश्वराय नमः धूपमाघ्रापयामि।

सुमुखाय विघ्नेश्वराय नमः - दीपं दर्शयामि।

सुमुखाय विघ्नेश्वराय नमः नारिकेलखण्ड द्वयं कदलीफलं गुडं सर्वं महानैवेद्यं निवेदयामि। निवेदनानन्तरं आचमनं समर्पयामि।

सुमुखाय विघ्नेश्वराय नमः कर्पूरताम्बूलं समर्पयामि।

सुमुखाय विघ्नेश्वराय नमः मन्त्रपुष्पं समर्पयामि।

सुमुखाय विघ्नेश्वराय नमः स्वर्णपुष्पं समर्पयामि।

सुमुखाय विघ्नेश्वराय नमः सर्वोपचारपूजाः समर्पयामि।

वक्रतुण्ड महाकाय सूर्यकोटि समप्रभ।
निर्विघ्नं कुरु मे देव सर्वकार्येषु सर्वदा।
सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः।
लम्बोदरश्च विकटो विघ्नराजो विनायकः।
धूमकेतुर्गणाध्यक्षः फालचन्द्रो गजाननः।

वक्रतुण्डः शूर्पकर्णो हेरम्बः स्कन्दपूर्वजः ।
षोडशैतानि नामानि यः पठेच्छृणुयादपि ।
विद्यारंभे विवाहे च प्रवेशे निर्गमे तथा ।
सङ्ग्रामे सर्वकार्येषु विघ्नस्तस्य न जायते ॥

(चिकीर्षितं कर्म आरभ्य विघ्नेश्वरं यथास्थानं प्रतिष्ठापयेत् ।) अस्मात् हरिद्राबिम्बात् भगवन्तं सुमुखं विघ्नेश्वरं यथास्थानं प्रतिष्ठापयामि - शोभनार्थे क्षेमाय पुनरागमनाय च ॥

## முதலில் விக்கினேசுவரபூஜை

*(புதுப்பணி தொடங்கு முன் தடையின்றி பணி நிறைவுற மஞ்சள் தூளில் பிடித்த பிள்ளையாரை வழிபடுகிற முறை)*

ஓம் வக்ரதுண்ட மஹாகாய ஸூர்யகோடிஸமப்ரப ।
நிர்விக்நம் குருமே தேவ ஸர்வகார்யேஷு ஸர்வதா ॥

## ஸ்ரீகுருப்ப்யோ நம: ।

*ஶுக்லாம்பதரம் விஷ்ணும் ஶஶிவர்ணம் சதுர்ப்புஜம் ।*
*ப்ரஸன்னவதநம் த்த்யாயேத் ஸர்வவிக்க்நோபஶாந்தயே ॥*

*பிராணாயாமம் (ஸங்கல்பம்) கரிஷ்யமாணஸ்ய கர்மண: நிர்விக்க்நேந பரிஸமாப்த்யர்த்தம் ஆதௌவிக்க்நேஶ்வர பூஜாம் கரிஷ்யே । (கையை அலம்பி)*

*★ ஓம் கணாநாம் த்வா கணபதிம் ஹவாமஹே கவிம் கவீநாம் உபம ஶ்ரவஸ்தமம். ஜ்யேஷ்ட்டராஜம் ப்ரம்ஹணாம் ப்ரம்ஹணஸ்பத ஆநஶ் ஶ்ருண்வந்நூதிபிஸ் ஸீத ஸாதநம் । அஸ்மிந் ஹரித்ராபிம்பே ஸுமுகம் விக்க்நேஶ்வரம் த்த்யாயாமி । ஆவாஹயாமி । (ஒவ்வொரு உபசாரத்திற்கு முன்னும் பிரணவம் சேர்க்கவும்.)*

*ஸுமுகாய விக்க்நேஶ்வராய நம: ஆஸனம் ஸமர்பயாமி ।*
*ஸுமுகாய விக்க்நேஶ்வராய நம: பாத்யம் ஸமர்பயாமி ।*
*ஸுமுகாய விக்க்நேஶ்வராய நம: அர்க்க்யம் ஸமர்பயாமி ।*
*ஸுமுகாய விக்க்நேஶ்வராய நம: ஆசமநீயம் ஸமர்பயாமி ।*

ஸுமுகாய விக்க்நேஶ்வராய நம: மதுபர்கம் ஸமர்பயாமி ।
ஸுமுகாய விக்க்நேஶ்வராய நம: ஸ்நபயாமி। ஸ்நானாநந்தரம் ஆசமநீயம் ஸமர்பயாமி ।

ஸுமுகாய விக்க்நேஶ்வராய நம:- வஸ்த்ராணி தாரயாமி ।
ஸுமுகாய விக்க்நேஶ்வராய நம:- உபவீதம் ஸமர்பயாமி ।
ஸுமுகாய விக்க்நேஶ்வராய நம:- ஆபரணாநி ஸமர்பயாமி ।
ஸுமுகாய விக்க்நேஶ்வராய நம:- கந்த்தான் தாரயாமி ।
கந்த்தோபரி ஹரித்ராகுங்குமம் ஸமர்பயாமி ।
ஸுமுகாய விக்க்நேஶ்வராய நம:- அக்ஷதான் ஸமர்பயாமி ।
ஸுமுகாய விக்க்நேஶ்வராய நம:- புஷ்பை: பூஜயாமி.

ஓம் ஸுமுகாய நம: । ஓம் ஏகதந்தாய நம: । ஓம் கபிலாய நம: । ஓம் கஜகர்ணகாய நம: । ஓம் லம்போதராய நம: । ஓம் விகடாய நம: । ஓம் விக்க்நராஜாய நம: । ஓம் விநாயகாய நம: । ஓம் தூமகேதவே நம: । ஓம் கணாத்த்யக்ஷாய நம: । ஓம் ப்பாலசந்த்ராய நம: । ஓம் கஜாநநாய நம: । ஓம் வக்ரதுண்டாய நம: । ஓம் ஶூர்பகர்ணாய நம: । ஓம் ஹேரம்பாய நம: । ஓம் ஸ்கந்த பூர்வஜாய நம: । ஓம் விக்க்நேஶ்வராய நம: ॥

ஸுமுகாய விக்க்நேஶ்வராய நம:-தூபம் ஆக்க்ராபயாமி ।
ஸுமுகாய விக்க்நேஶ்வராய நம:-தீபம் தர்ஶயாமி ।
ஸுமுகாய விக்க்நேஶ்வராய நம:- நாரிகேள கண்டத்வயம் கதளீபலம் குடம் ஸர்வம் மஹாநைவேத்யம் ஸமர்பயாமி ।
நிவேதநாந்தரம் ஆசமநீயம் ஸமர்பயாமி ।
ஸுமுகாய விக்க்நேஶ்வராய நம:- தாம்பூலம் । ஸமர்பயாமி ।
ஸுமுகாய விக்க்நேஶ்வராய நம:-மந்த்ரபுஷ்பம் ஸமர்பயாமி ।
ஸுமுகாய விக்நேஶ்வராய நம:- ஸ்வர்ணபுஷ்பம் ஸமர்பயாமி ।
ஸுமுகாய விக்க்நேஶ்வராய நம:- ஸர்வோபசாரபூஜாஸ் ஸமர்பயாமி ।

வக்ரதுண்ட மஹாகாய ஸூர்ய கோடிஸமப்ரப ।
நிர்விக்க்நம் குருமேதேவ ஸர்வகார்யேஷு ஸர்வதா ॥
ஸுமுகஶ்சைக தந்தஶ்ச கபிலோ கஜகர்ணக: ।
லம்போதரஶ்ச விகடோ விக்க்நராஜோ விநாயக: ।

தூமகேதுர் கணாத்த்யக்ஷ: ப்பால சந்த்ரோ கஜாநந:।
வக்ரதுண்டஶ் ஶூர்பகர்ணோ ஹேரம் பஸ்ஸ்கந்தபூர்வஜ:।
ஷோடஶைதாநி நாமாநி ய: படேத் ஶ்ருணுயாதபி।
வித்யாரம் ப்பே விவாஹே ச ப்ரவேஶே நிர்கமே ததா।
ஸங்க்ராமே ஸர்வகார்யேஷு விக்க்நஸ்தஸ்ய நஜாயதே॥

(என்று கோரி, தொடங்க விருக்கிற பணியைத் தொடங்கிய பின் விக்கிநேசவரரைத் தம்மிருப்பிடம் சென்று மறுபடி நற்பணி தொடங்குகையில் முன்தோன்றக் கோருவர்.)

அஸ்மாத் ஹரித்ராபிம்பாத் பகவந்தம் ஸுமுகம் விக்க்நேஶ்வரம் யதாஸ்த்தானம் ப்ரதிஷ்ட்டாபயாமி ஶோபநார்த்தே க்ஷேமாய புநராகமநாய ச।

## सिद्धिविनायकपूजा

(भाद्रपदशुक्लचतुर्थी पूजा)

शुक्लांबरधरं विष्णुं शशिवर्णं चतुर्भुजम्।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये॥

ममोपात्तसमस्त दुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं शुभे शोभने मुहूर्ते... प्रभवादिषष्टि संवत्सराणां मध्ये ... संवत्सरे ... ऋतौ भाद्रपदमासे (श्रावणमासे) शुक्लपक्षे चतुर्थ्यां ... नक्षत्रयुक्तायां ... वासरयुक्तायां शुभतिथौ श्रीसिद्धि विनायक प्रीत्यर्थं श्रीसिद्धि विनायकप्रसादेन अस्माकं सकुटुम्बानां क्षेमस्थैर्यवीर्य विजयायुरारोग्यैश्वर्याणां अभिवृद्ध्यर्थं निर्विघ्नेन सर्वकार्य सिद्ध्यर्थं श्रीसिद्धि विनायक पूजां करिष्ये। (अप उपस्पृश्य)

आसनपूजा। पृथिव्या मेरुपृष्ठ ऋषिः। सुतलं छन्दः। कूर्मो देवता।
पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता।
त्वं च धारय मां देवि पवित्रं चासनं कुरु।

पूर्वद्वारे द्वारश्रियै नमः। मूषकवाहनाय नमः। वक्रतुण्डाय नमः।
दक्षिणद्वारे द्वारश्रियै नमः। एकदन्ताय नमः। महोदराय नमः।

पश्चिमद्वारे द्वारश्रियै नमः। गजाननाय नमः। लंबोदराय नमः।
उत्तरद्वारे द्वारश्रियै नमः। विघ्नराजाय नमः। धूम्रवर्णाय नमः।
सकलतत्वात्मशक्तियुक्ताय अनन्ताय योगपीठासनाय नमः।
भगवतः पीठशक्तिभ्यो नमः।

कलश पूजा। (कलशं गन्ध-पुष्पाक्षतै-रभ्यर्च्य)। गङ्गे च यमुने चैव गोदावरि सरस्वति। नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु॥ (इति प्रार्थ्य कलशजलेन पूजाद्रव्याणि आत्मानं च प्रोक्ष्य)

घण्टा पूजा। जयध्वनि मन्त्रमातः स्वाहा। आगमार्थं तु देवानां गमनार्थं तु रक्षसाम्। घण्टारवं करोम्यादौ देवताह्वानकारणम्। (घण्टानादं कुर्यात्)

प्राणप्रतिष्ठा। (प्रतिमासु देवतां ध्यात्वा प्राणप्रतिष्ठां कुर्यात्।) अस्य श्री प्राणप्रतिष्ठा-महामन्त्रस्य ब्रह्म-विष्णु-महेश्वरा ऋषयः। ऋग्यजुस्सामाथर्वाणि छन्दांसि। सकलजगत्सृष्टिस्थिति-संहारकारिणी प्राणशक्तिः परा देवता। आं बीजम्। ह्रीं शक्तिः। क्रों कीलकम्। प्राणप्रतिष्ठार्थे जपे विनियोगः।
आं अंगुष्ठाभ्यां नमः। ह्रीं तर्जनीभ्यां नमः। क्रों मध्यमाभ्यां नमः। आं अनामिकाभ्यां नमः। ह्रीं कनिष्ठिकाभ्यां नमः। क्रों करतलकरपृष्ठाभ्यां नमः॥

आं हृदयाय नमः। ह्रीं शिरसे स्वाहा। क्रों शिखायै वषट्। आं कवचाय हुं। ह्रीं नेत्रत्रयाय वौषट्। क्रों अस्त्राय फट्॥ भूर्भुवस्सुवरोम् (दिग्बन्धः)। ध्यानम्॥

रक्तांभोधिस्थ-पोतोल्लसदरुण-सरोजाधिरूढा कराब्जैः
पाशं कोदण्ड-मिक्षूद्भवमळिगुण-मप्यंकुशं पंचबाणान्।
बिभ्राणाऽसृक्कपालं त्रिनयनलसिता पीनवक्षोरुहाढ्या
देवी बालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परा नः॥
लं-पृथिव्यात्मिकायै गन्धं समर्पयामि।
हं-आकाशात्मिकायै पुष्पाणि समर्पयामि।
यं-वाय्वात्मिकायै धूपमाघ्रापयामि।

रं-अग्न्यात्मिकायै दीपं दर्शयामि।

वं-अमृतात्मिकायै अमृतं महानैवेद्यं निवेदयामि।

सं-सर्वात्मिकायै सर्वोपचारपूजां समर्पयामि॥

ओं आं ह्रीं क्रों क्रों ह्रीं आं। हंसः सोऽहं सोऽहं हंसः। यर लव शष स हों। श्रीसिद्धिविनायकस्य प्राण इह प्राणः जीव इह स्थितः। सर्वे न्द्रियाणि वाङ्मन स्त्वक्चक्षुः श्रोत्रजिह्वाघ्राण प्राणापानव्या नोदान समानाः इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा। सान्निध्यं कुर्वन्तु स्वाहा॥

आं ह्रीं क्रों (इति ४० वारं जप्त्वा मधुघृते प्राणशक्त्यै निवेद्य) प्राणशक्त्यै नमः आज्यमधूपहारं निवेदयामि। भगवन् सिद्धिविनायक ! आवाहितो भव। स्थापितो भव। सन्निहितो भव। सन्निरुद्धो भव। अवकुण्ठितो भव। सुप्रीतो भव। सुप्रसन्नो भव। सुमुखो भव। वरदो भव। प्रसीद प्रसीद। देव सर्व जगन्नाथ यावत् पूजावसानकम्। तावत्त्वं प्रीतिभावेन बिंबेऽस्मिन् सन्निधिं कुरु॥

एकदन्तं शूर्पकर्णं गजवक्त्रं चतुर्भुजम्।
पाशाङ्कुशधरं देवं ध्यायामि श्रीविनायकम्॥

सिद्धिविनायकं ध्यायामि।

आगच्छ त्वं जगन्नाथ सुरासुरनमस्कृत।
अनाथनाथ सर्वज्ञ विघ्नराज कृपां कुरु॥

सिद्धिविनायकं आवाहयामि।

विचित्ररत्नखचितं दिव्याभरणसंयुतम्।
स्वर्णसिंहासनं चारु गृहाण सुरपूजित॥

सिद्धिविनायकाय नमः आसनं समर्पयामि

सर्वतीर्थसमुद्भूतं पाद्यं गन्धादि संयुतम्।
विघ्नराज गृहाणेदं भगवन् भक्तवत्सल॥

सिद्धिविनायकाय नमः पाद्यं समर्पयामि

अर्घ्यं च फलसंयुक्तं गन्धपुष्पाक्षतैर्युतम्।
गणाध्यक्ष नमस्तेऽस्तु गृहाण करुणानिधे॥

सिद्धिविनायकाय नमः अर्घ्यं समर्पयामि

विनायक नमस्तुभ्यं त्रिदशैरभिवन्दित।
गङ्गोदकेन शुद्धेन शीघ्रमाचमनं कुरु॥

सिद्धिविनायकाय नमः आचमनीयं समर्पयामि

दध्याज्यमधुसंयुक्तं मधुपर्कं मयाऽऽहृतम्।
गृहाण सर्वलोकेश गजवक्त्र नमोऽस्तु ते॥

सिद्धिविनायकाय नमः मधुपर्कं समर्पयामि

गङ्गा गोदावरी तुङ्गा यमुना च सरस्वती।
तासां तोयमुमापुत्र स्नानार्थं प्रतिगृह्यताम्॥

सिद्धिविनायकाय नमः स्नपयामि। स्नानानन्तरं आचमनीयं समर्पयामि

रक्तवस्त्रमिदं देव दिव्यकाञ्चन सन्निभम्।
सर्वप्रद गृहाणेश लम्बोदर हरात्मज॥

सिद्धिविनायकाय नमः वस्त्रं समर्पयामि

राजतं ब्रह्मसूत्रं च काञ्चनञ्चोत्तरीयकम्।
गृहाण चारु सर्वज्ञ भक्तानां वरदो भव॥

सिद्धिविनायकाय नमः यज्ञोपवीतं समर्पयामि

नानाविधानि दिव्यानि नानारत्नोज्ज्वलानि च।
भूषणानि गृहाणेश पार्वतीप्रियनन्दन॥

सिद्धिविनायकाय नमः आभरणानि समर्पयामि

कस्तूरी चन्दनं चैव केसरेण समन्वितम्।
विलेपनं सुरश्रेष्ठ चन्दनं प्रतिगृह्यताम्॥

सिद्धिविनायकाय नमः गन्धान् धारयामि

रक्ताक्षतांश्च देवेश गृहाण द्विरदानन।
ललाटफलके चन्द्रः तस्योपर्यवधार्यताम्॥

सिद्धिविनायकाय नमः अक्षतान् सर्मपयामि

माल्यानि च सुगन्धीनि मल्लिकादीनि वै प्रभो।
मयाहृतानि पुष्पाणि प्रतिगृह्णीष्व शाङ्कर॥
करवीरैः जातिसुमैः चम्पकैर्वकुलैश्शुभैः।
शतपत्रैश्च कल्हारैः अर्चामि गणनायकम्॥

सिद्धिविनायकाय नमः पुष्पाणि सर्मपयामि

ओं सुमुखाय नमः। एकदन्ताय नमः। कपिलाय नमः। गजकर्णकाय नमः। लंबोदराय नमः। विकटाय नमः। विघ्नराजाय नमः। गणाधिपाय नमः। धूमकेतवे नमः। गणाध्यक्षाय नमः। फाल चन्द्राय नमः। गजाननाय नमः। वक्रतुण्डाय नमः। शूर्पकर्णाय नमः। हेरम्बाय नमः। स्कन्द पूर्वजाय नमः। सिद्धिविनायकाय नमः।

अङ्गपूजा - ओं ... नमः ... पूजयामि।

गणेश्वराय - पादौ। विघ्नराजाय - जानुनी। आखुवाहनाय - ऊरू। हेरम्बाय - कटिं। कामारिसूनवे - नाभिं। लम्बोदराय - उदरं। गौरीसुताय - स्तनौ। गणनाथाय - हृदयं। स्थूलकण्ठाय - कण्ठं। स्पन्दाग्रजाय - स्कन्धौ। पाशहस्ताय - हस्तान्। गजवक्त्राय - वक्त्रां। विघ्नहर्त्रे - ललाटं। सर्वेश्वराय - शिरः। गणाधिपाय - सर्वाङ्गं।

(अङ्ग पूजा - द्वितीया) ओं... नमः ... पूजयामि)

| | |
|---|---|
| १. श्रीगणेशाय - पादौ | ५.लम्बोदराय - उदरं |
| २. अघनाशिने - जानू | ६.गणेश्वराय - हृदयं |
| ३. सुबाहवे - ऊरू | ७.कपिलाय - स्तनौ |
| ४. विघ्नहर्त्रे - कटिं | ८.पार्थिवाय - भुजान् |

| | | | |
|---|---|---|---|
| ९. | मञ्जुलकण्ठाय - कण्ठं | १३. | विकटनेत्राय - नेत्राणि |
| १०. | स्कन्दाग्रजाय - स्कन्धान् | १४. | गजकर्णाय - कर्णौ |
| ११. | पाशहस्ताय - हस्तान् | १५. | सर्वसिद्धिप्रदाय - शिरः |
| १२. | गजवक्त्राय - मुखं | १६. | सर्वेश्वराय - सर्वाङ्गम् |

(अङ्गपूजा तृतीया) (ओं - नमः - पूजयामि।)

| | |
|---|---|
| पार्वती नन्दनाय - पादौ | हरसुताय - हस्तान् |
| गणेशाय - गुल्फे | ब्रह्मचारिणे - बाहून् |
| जगद्धात्रे - जङ्घे | सुमुखाय - मुखं |
| जगद्वल्लभाय - जानुनी | एकदन्ताय - दन्तान् |
| उमापुत्राय - ऊरू | विघ्ननेत्रे - नेत्राणि |
| विकटाय - कटिं | शूर्पकर्णाय - कर्णौ |
| गुहाग्रजाय - नाभिं | फालचन्द्राय - फालं |
| महत्तमाय - उदरं | नागाभरणाय - नासां |
| विनायकाय - वक्षः | चिरन्तनाय - चिबुकं |
| पाशच्छिदे - पार्श्वे | स्थूलोष्ठाय - ओष्ठौ |
| हेरम्बाय - हृदयं | गलन्मदाय - गण्डं |
| मदोत्कटाय - कण्ठं | कपिलाय - कचान् |
| स्कन्दाग्रजाय - स्कन्धान् | शिवप्रियाय - शिरः |
| | सर्वमङ्गलासुताय - सर्वाण्यङ्गानि |

पत्रपूजा।

| | | | |
|---|---|---|---|
| ओं | सुमुखाय नमः | मालती पत्रं | समर्पयामि। |
| | गणाधिपाय नमः | भृङ्गराज पत्रं | समर्पयामि। |
| | उमापुत्राय नमः | बिल्व पत्रं | समर्पयामि। |
| | गजाननाय नमः | श्वेतदूर्वा पत्रं | समर्पयामि। |

| | | |
|---|---|---|
| लम्बोदराय नमः | बदरी पत्रं | समर्पयामि। |
| हरसूनवे नमः | धत्तूर पत्रं | समर्पयामि। |
| गजकर्णकाय नमः | तुलसी पत्रं | समर्पयामि। |
| वक्रतुण्डाय नमः | शमी पत्रं | समर्पयामि। |
| गुहाग्रजाय नमः | अपामार्ग पत्रं | समर्पयामि। |
| एकदन्ताय नमः | बृहती पत्रं | समर्पयामि। |
| विकटाय नमः | करवीर पत्रं | समर्पयामि। |
| कपिलाय नमः | अर्क पत्रं | समर्पयामि। |
| गजदन्ताय नमः | अर्जुन पत्रं | समर्पयामि। |
| विघ्नराजाय नमः | विष्णुक्रान्तपत्रं | समर्पयामि। |
| वटवे नमः | दाडिमी पत्रं | समर्पयामि। |
| सुराग्रजाय नमः | देवदारु पत्रं | समर्पयामि। |
| फालचन्द्राय नमः | मरुवक पत्रं | समर्पयामि। |
| हेरम्बाय नमः | अश्वत्थ पत्रं | समर्पयामि। |
| चतुर्भुजाय नमः | जाती पत्रं | समर्पयामि। |
| विनायकाय नमः | केतकी पत्रं | समर्पयामि। |
| सर्वेश्वराय नम ः | अगस्त्य पत्रं | समर्पयामि। |

(पत्रपूजा द्वितीया)

१. उमापुत्राय - माचीपत्रं
२. हेरम्बाय - बृहतीपत्रं
३. लम्बोदराय - बिल्वपत्रं
४. द्विरदाननाय - दूर्वां
५. धूमकेतवे - धत्तूरपत्रं
६. बृहते - बदरीपत्रं
७. अपवर्गदाय - अपामार्गपत्रं
८. द्वैमातुराय - तुलसीपत्रं
९. चिरन्तनाय - चूतपत्रं
१०. कपिलाय - करवीरपत्रं
११. विष्णुस्तुताय - विष्णुक्रान्तपत्रं
१२. अमलाय - आमलकीपत्रं

१३. महते - मरुवकपत्रं
१४. सिन्धुराय - सिन्धूरपत्रं
१५. गजाननाय - जातीपत्रं
१६. गण्डगळन्मदाय - गण्डलीपत्रं
१७. शंकरप्रियाय - शमीपत्रं
१८. भृङ्गराजत्कटाय - भृङ्गराजपत्रं
१९. अर्जुनदन्ताय - अर्जुनपत्रं
२०. अर्कप्रभाय - अर्कपत्रं
२१. एकदन्ताय - दाडिमीपत्रं

पुष्प पूजा।

| | | | |
|---|---|---|---|
| ओं | पञ्चास्य गणपतये नमः | पुन्नागपुष्पं | समर्पयामि। |
| | महागणपतये नमः | मन्दार पुष्पं | समर्पयामि। |
| | धीरगणपतये नमः | दाडिमी पुष्पं | समर्पयामि। |
| | विष्वक्सेनगणपतये नमः | वकुल पुष्पं | समर्पयामि। |
| | आमोदगणपतये नमः | अमृणाळ पुष्पं | समर्पयामि। |
| | प्रमथगणपतये नमः | पाटली पुष्पं | समर्पयामि। |
| | रुद्रगणपतये नमः | द्रोण पुष्पं | समर्पयामि। |
| | विद्यागणपतये नमः | धुत्तूर पुष्पं | समर्पयामि। |
| | विघ्नगणपतये नमः | चम्पक पुष्पं | समर्पयामि। |
| | दुरितगणपतये नमः | रसाल पुष्पं | समर्पयामि। |
| | कामितार्थप्रदगणपतये नमः | केतकी पुष्पं | समर्पयामि। |
| | संमोहगणपतये नमः | माधवी पुष्पं | समर्पयामि। |
| | विष्णुगणपतये नमः | शम्याक पुष्पं | समर्पयामि। |
| | ईशगणपतये नमः | अर्क पुष्पं | समर्पयामि। |
| | गजास्यगणपतये नमः | कल्हार पुष्पं | समर्पयामि। |
| | सर्वसिद्धिगणपतये नमः | सेवन्तिकापुष्पं | समर्पयामि। |
| | वीरगणपतये नमः | बिल्व पुष्पं | समर्पयामि। |
| | कन्दर्पगणपतये नमः | करवीर पुष्पं | समर्पयामि। |

| | | |
|---|---|---|
| उच्छिष्टगणपतये नमः | कुन्द पुष्पं | समर्पयामि । |
| ब्रह्मगणपतये नमः | पारिजात पुष्पं | समर्पयामि । |
| ज्ञानगणपतये नमः | जाती पुष्पं | समर्पयामि । |

(पुष्पपूजा-द्वितीया)

गणाधिपाय - केतकीपुष्पं
इभवक्त्राय - चंपकपुष्पं
लंबोदराय - पूगपुष्पं
वटवे - गोविन्दपुष्पं
सिद्धिविनायकाय - जातीपुष्पं
नागयज्ञोपवीतिने - करवीरपुष्पं
गजकर्णकाय - धत्तूरपुष्पं
भक्तप्रियाय - शतपुष्पं
पार्वतीप्रियाय - पारिजातपुष्पं
विघ्नराजाय - वकुलपुष्पं
कुमारगुरवे - विष्णुक्रान्तिपुष्पं
अघनाशनाय - मल्लिकापुष्पं
सर्वशक्तिकाय - गिरिकर्णिकापुष्पं
फालचन्द्राय - पद्मपुष्पं
रुद्रप्रियाय - रक्तोत्पलपुष्पं
विनायकाय - इन्दीवरपुष्पं
मूषिकवाहनाय - तुलसीपुष्पं
अव्यक्ताय - नन्द्यावर्तपुष्पं
नागाधिपतये - नागचंपकपुष्पं
विघ्ननायकाय - दाडिमपुष्पं
वक्रतुण्डाय - कल्हारपुष्पं

सिद्धिविनायकाय नमः, सर्वाणि पुष्पाणि समर्पयामि ।

दूर्वायुग्म पूजा-

गणाध्यक्ष महादेव शिवपुत्राभय प्रद ।
दूर्वायुग्मं गृहाणेश गणाधिप नमोऽस्तु ते ॥

गणाधिपाय नमः - दूर्वायुग्मं समर्पयामि ।

पतिर्गणानां सर्वेषामम्बिकागर्भसंभव ।
दूर्वायुग्मं गृहाणेश उमापुत्र नमोऽस्तु ते ॥

उमापुत्राय नमः - दूर्वायुग्मं समर्पयामि।

भक्तानां स्मरणादेव सर्वाघक्षयकृद्विभुः।
दूर्वायुग्मं गृहाणेश अघनाश नमोऽस्तु ते॥

अघनाशनाय नमः - दूर्वायुग्मं समर्पयामि।

नृपाणां युद्धसमये भजतामभयप्रद।
दूर्वायुग्मं गृहाणेश विनायक नमोऽस्तु ते॥

विनायकाय नमः - दूर्वायुग्मं समर्पयामि।

जनितो देवतार्थाय तारासुरवधे प्रभुः।
दूर्वायुग्मं गृहाणेश ईशपुत्र नमोऽस्तु ते॥

ईशपुत्राय नमः - दूर्वायुग्मं समर्पयामि।

स्कन्दाग्रजात भूतेश लम्बोदर गजानन।
दूर्वायुग्मं गृहाणेश सर्वसिद्धिप्रदायक॥

सर्वसिद्धिप्रदायकाय नमः - दूर्वायुग्मं समर्पयामि।

राक्षसानां विनाशाय दन्तायुधधराभव।
दूर्वायुग्मं गृहाणेश एकदन्त नमोऽस्तु ते॥

एकदन्ताय नमः - दूर्वायुग्मं समर्पयामि।

उमामहेशयोर्दृष्ट्या जातोऽसौ गजवक्त्रकः।
दूर्वायुग्मं गृहाणेश इभवक्त्र नमोऽस्तु ते॥

इभवक्त्राय नमः - दूर्वायुग्मं समर्पयामि।

मूषिकोत्तममारुह्य जिता दैत्या महाहवे।
दूर्वायुग्मं गृहाणेश नमो मूषिकवाहन॥

मूषिकवाहनाय नमः - दूर्वायुग्मं समर्पयामि।

अग्निभूर्बाहुलेयस्य गुरुमुख्यो भवान्प्रभो।
दूर्वायुग्मं गृहाणेश कुमारगुरवे नमः॥

कुमारगुरवे नमः - दूर्वायुग्मं समर्पयामि।

(गणाधिप नमस्तेऽस्तु उमापुत्राघनाशन।
विनायकेशपुत्राव सर्वसिद्धिप्रदायक॥
एकदन्तेभवक्त्राव सदा मूषकवाहन।
नमः कुमारगुरवे दूर्वायुग्मं गृहाण भोः॥

## दूर्वायुग्मपूजा (द्वितीया)

प्रतिनाम ओं - नमः दूर्वायुग्मं समर्पयामि इति योजयेत्।

| | | |
|---|---|---|
| गणाधिपाय | इभवक्त्राय | गजनासिकाय |
| पाशाङ्कुशधराय | मूषिकवाहनाय | कपित्थफलप्रियाय |
| आखुवाहनाय | कुमारगुरवे | गजमुखाय |
| विनायकाय | कपिलवर्णाय | सुप्रसन्नाय |
| ईशपुत्राय | ब्रह्मचारिणे | सुराग्रजाय |
| सर्वसिद्धिप्रदाय | मोदकहस्ताय | उमापुत्राय |
| एकदन्ताय | सुरश्रेष्ठाय | स्कन्दप्रियाय |

## गणपति द्वादशनामावलिः

ओं + नमः

| | | |
|---|---|---|
| विघ्नराजाय | फालचन्द्राय | गणपतये |
| वक्रतुण्डाय | कृष्णपिङ्गलाय | लंबोदराय |
| धूम्रवर्णाय | विनायकाय | हस्तिमुखाय |
| एकदंष्ट्राय | गजकर्णकाय | विकटाय |

# श्रीगणेशाष्टोत्तरशतनामावलिः

## ओं + नमः

गणेश्वराय
विघ्नराजाय
गौरीपुत्राय
विनायकाय
स्कन्दाग्रजाय
अव्ययाय
पूताय
दक्षाय
अध्यक्षाय
द्विजप्रियाय १०
अग्निगर्वच्छिदे
इन्द्रश्रीप्रियाय
वाणीबलाय
सर्वसिद्धिप्रदाय
शर्वतनयाय
शर्वरीपतये
सर्वात्मकाय
सृष्टिकर्त्रे
देवानीकार्चिताय
शिवाय २०
सिद्धाय
बुद्धिप्रियाय
शान्ताय
ब्रह्मचारिणे
गजाननाय
द्वैमातुराय
मुनिस्तुत्याय
भक्तविघ्नविनाशकाय
एकदन्ताय
चतुर्बाहवे ३०
चतुराय
शक्तिसंयुताय
लंबोदराय
शूर्पकर्णाय
हेरम्बाय
ब्रह्मवित्तमाय
कालाय
गृहपतये
कामिने
सोमसूर्याग्निलोचनाय४०
पाशाङ्कुशधराय
चण्डाय
गुणातीताय
निरञ्जनाय
अकल्मषाय
स्वयंसिद्धाय
सिद्धार्चितपदाम्बुजाय
बीजापूरकराय
अव्यक्ताय
वरदाय ५०
शाश्वताय
कृतिने
विद्वत्प्रियाय
वीतरागाय
गदिने
चक्रिणे
इक्षुचापवते
अब्जोत्पलकराय
अव्यक्ताय
श्रीदाय ६०
श्रीपतिस्तुतिहर्षिताय
कुलाद्रिभेत्रे
जटिलाय
अमरेश्वराय
चन्द्रचूडाय
नागोपवीतिने

| | | |
|---|---|---|
| श्रीकण्ठाय | वृद्धिदाय | सच्चिदानन्दविग्रहाय |
| अर्चिताय | सुभगाय | ज्ञानिने |
| रामार्चिताय | शूराय | मायासुताय |
| व्रतिने ७० | वागीशाय | दान्ताय |
| स्थूलकण्ठाय | सिद्धिदायकाय | ब्रह्मिष्ठाय |
| मायाकर्त्रे | दूर्वाबिल्वप्रियाय | भयवर्जिताय १०० |
| सामघोषप्रियाय | शान्ताय | प्रमत्तदैत्यभयप्रदाय |
| पराय | पापहारिणे | व्यक्तमूर्तये |
| स्थूलतुण्डाय | समाहिताय | पार्वतीशङ्करोत्सङ्ग खेलनोत्सुकलालसाय |
| अग्रण्यै | आश्रितश्रीप्रदाय९० | समस्तजगदाधाराय |
| धीराय | सौम्याय | वरमूषिकवाहनाय |
| ग्रामण्यै | भक्तकांक्षितदायकाय | हृष्टचित्ताय |
| गणपाय | अच्युताय | सर्वात्मने |
| स्थिराय ८० | केवलसिद्धाय | सर्वसिद्धिप्रदायकाय १०८ |

दशाङ्गं गुग्गुलुं धूपं सुगन्धं च मनोहरम्।
गृहाण सर्वदेवेश उमापुत्र नमोऽस्तु ते॥

सिद्धिविनायकाय नमः धूपमाघ्रपयामि

सर्वज्ञ सर्वलोकेश त्रैलोक्य तिमिरापह।
गृहाण मङ्गलं दीपं रुद्रप्रिय नमोऽस्तु ते॥

सिद्धिविनायकाय नमः दीपं समर्पयामि।

नैवेद्यं गृह्यतां देव भक्तिं मे ह्यचलां कुरु।
ईप्सितं मे वरं देहि परत्र च परां गतिम्।
नानाखाद्यमिदं दिव्यं तुष्ट्यर्थं ते निवेदितम्।
मया भक्त्या शिवापुत्र गृहाण गणनायक॥

सिद्धिविनायकाय नमः नैवेद्यं लड्डुकादीनि समर्पयामि।

फलपूजा- ओं - नमः - समर्पयामि।

गणाधिपाय - नारिकेलफलं। भक्तप्रियाय - जंबीरफलं। इभवक्त्राय - इक्षुदण्डं। कम्बुग्रीवाय - कपित्थफलं। लंबोदराय - कदलीफलं। कपिलाय- कर्कटीफलं। वटवे - दाडिमफलं।

पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम्।
कर्पूरैलसमायुक्तं ताम्बूलं प्रतिगृह्यताम्॥

सिद्धिविनायकाय नमः ताम्बूलं समर्पयामि।

चन्द्रादित्यौ च ताराणि विद्युदग्निस्तथैव च।
त्वमेव सर्वतेजांसि आर्तिक्यं प्रतिगृह्यताम्॥

सिद्धिविनायकाय नमः नीराजनं समर्पयामि।

विघ्नेश्वर विशालाक्ष सर्वाभीष्टफलप्रद।
प्रदक्षिणं करोमि त्वां सर्वान् कामान् प्रयच्छ मे॥

सिद्धिविनायकाय नमः प्रदक्षिणं समर्पयामि।

नमस्ते विघ्नसंहर्त्रे नमो भक्तेप्सितप्रद।
नमस्ते देवदेवेश नमस्ते गणनायक॥

सिद्धिविनायकाय नमः नमस्कारान् समर्पयामि।

विनायकेशपुत्रेश गणराज सुरोत्तम।
देहि मे सकलान् भोगान् वन्दे सिद्धिविनायक॥

सिद्धिविनायकाय नमः मन्त्रपुष्पं समर्पयामि।

पुष्पाञ्जलिः-

ओं - नमः - पुष्पाञ्जलिं समर्पयामि।

| | | |
|---|---|---|
| १. गजाननाय | २. एकदन्ताय | ३. कपिलाय |
| ४. स्वर्णदेहाय | ५. उमासुताय | ६. अघनाशनाय |

७. लम्बोदराय ८. शूर्पकर्णाय ९. अनन्ताभरणाय
१०. कल्पद्रुमाय ११. रुद्रप्रियाय १२. गजवक्त्राय
१३. कपिलाय १४. भालचन्द्राय १५. सर्वसिद्धिप्रदाय
१६. गणाध्यक्षाय १७. वक्रतुण्डाय १८. हेरम्बाय
१९. मूषिकवाहनाय २०. कुमारगुरवे

विनायक गणेशान सर्वदेव नमस्कृत।
पार्व तीपुत्र विघ्नेश मम विघ्नं विनाशय॥

सिद्धिविनायकाय नमः छत्रं समर्पयामि, चामरं वीजयामि, नृत्तं प्रदर्शयामि, वाद्यं घोषयामि, आन्दोलिकां आरोपयामि, समस्तराजोप चारान् समर्पयामि॥

अर्घ्यं गृहाण हेरम्ब वरप्रद विनायक।
गन्धपुष्पाक्षतैर्युक्तं भक्त्या दत्तं मया प्रभो॥

श्रीसिद्धिविनायकाय नमः इदमर्घ्यम्॥ (त्रिः)

नमस्तुभ्यं गणेशाय नमस्ते विघ्ननायक।
पुनरर्घ्यं प्रदास्यामि गृहाण गणनायक॥

श्रीसिद्धिविनायकाय नमः इदमर्घ्यम्॥ (त्रिः)

नमस्ते भिन्नदन्ताय नमस्ते हरसूनवे।
इदमर्घ्यं प्रदास्यामि संगृहाण गणाधिप॥

श्रीसिद्धिविनायकाय नमः इदमर्घ्यम्॥ (त्रिः)

गौर्यङ्गमलसंभूत ज्येष्ठस्वामिन् विनायक।
गणेश्वर गृहाणार्घ्यं गजानन नमोस्तु ते॥

श्रीसिद्धिविनायकाय नमः इदमर्घ्यम्॥ (त्रिः)

अनेन पूजनेन भगवान् सर्वात्मकः श्रीसिद्धिविनायकः प्रीयताम्। ओं तत्सत् ब्रह्मार्पणमस्तु।

# ஸித்திவிநாயக பூஜை

(விநாயக சதுர்த்தியன்று)

*ஶுக்லாம்பரதரம் விஷ்ணும் ஶஶிவர்ணம் சதுர்ப்புஜம் ।
ப்ரஸன்னவதநம் த்த்யாயேத் ஸர்வவிக்க்நோபஶாந்தயே ॥*

*ப்ராணாயாமம் மமோபாத்த ஸமஸ்ததுரித க்ஷயத்வாரா ஸ்ரீபரமேஶ்வர ப்ரீத்யர்த்தம் ஶுபேஶோபநே முஹூர்த்தே ... ப்ரபவாதி ஷஷ்டி: ஸம்வத் ஸராணாம் மத்த்யே ... ஸம்வத்ஸரே ... ருதௌ ... மாஸே ஶுக்லபக்ஷே சதுர்த்தயாம் ... நக்ஷத்ரயுக்தாயாம்... ஶுபதிதௌ ஸ்ரீஸித்த்தி விநாயக ப்ரஸாதஸித்த் யர்த்தம் ஸ்ரீ ஸித்த்தி விநாயகப்ரஸாதேந அஸ்மாகம் ஸகுடும் பாநாம் க்ஷேமஸ்த்தைர்ய வீர்யவிஜயாயுரா ரோக்யை ஶ்வர்யாணாம் அபிவ்ருத்த்யர்த்தம் நிர்விக்க்நேந ஸர்வகார்ய ஸித்த்யர்த்தம் ஸ்ரீ ஸித்த்திவிநாயக பூஜாம் கரிஷ்யே । (கையலம்பி)*

*மண்டபம் துவார ஸ்ரீ - துவார பாலக - ஆஸன - பீடபூஜை*

*பூர்வத்வாரே த்வார ஶ்ரியை நம: । மூஷிகவாஹநாய நம: । வக்ரதுண்டாய நம: । தக்ஷிணத்வாரே த்வார ஶ்ரியை நம: । ஏகதந்தாய நம: । மஹோதராய நம: । பஶ்சிமத்வாரே த்வாரஶ்ரியை நம: । கஜாநநாய நம: । லம் போதராய நம: । உத்தரத்வாரே த்வார ஶ்ரியை நம: । விக்க்நராஜாய நம: । தூம்ர வர்ணாய நம: । ஸகலதத்வாத்ம ஶக்தியுக்தாய அநந்தாய யோகபீடாஸ நாய நம: । பகவத: பீடசக்திப்ப்யோ நம: ।*

*(தான் அமர்கிற ஆஸனத்தை) ப்ருதிவ்யா மேருப்ருஷ்டருஷி: । ஸுதலம் சந்த: । கூர்மோ தேவதா ॥ ப்ருத்வி த்வயா த்ருதா லோகா தேவி த்வம் விஷ்ணுநா த்ருதா । த்வஞ் ச தாரய மாம் தேவி பவித்ரஞ் சாஸனம் குரு । (என வணங்கி)*

*கலச பூஜா ॥ கலசத்தை அலங்கரித்து, கங்கே ச யமுனே சைவ கோதாவரி ஸரஸ்வதி । நர்மதே ஸிந்து காவேரி ஜலே-ஸ்மின் ஸந்நிதிம் குரு ॥ என வேண்டி, கலசநீரால் பூஜைப்பொருளையும் தன்னையும் புரோக்ஷிக்கவும்.*

கண்டா பூஜா । ஜயத்வனி மந்த்ரமாத: ஸ்வாஹா । ஆகமார்த்தந்து தேவானும் கமனார்த்தந்து ரக்ஷஸாம் । கண்டாரவம் கரோம்யாதௌ தேவதாஹ்வான-காரணம் ॥ (மணியடித்து)

ப்ராணப்ரதிஷ்டா ॥ (பிரதிமையில் தேவதையை தியானித்துப் பிராணப் பிரதிஷ்டை செய்ய) । அஸ்ய ஸ்ரீ ப்ராணப்ரதிஷ்டா மஹாமந்த்ரஸ்ய, ப்ரஹ்ம-விஷ்ணு மஹேச்வரா ருஷய: ருக்யஜுஸ் ஸாமாதர்வாணி ச்சந்தாம்ஸி । ஸகலஜகத் ஸ்ருஷ்டி - ஸ்திதி-ஸம்ஹார - காரிணீ ப்ராணசக்தி: பரா தேவதா । ஆம்-பீஜம், ஹ்ரீம்-சக்தி:, க்ரோம் - கீலகம் । ப்ராணப்ரதிஷ்ட்டார்த்தே ஜபே விநியோக: ।

ஆம் - அங்குஷ்ட்டாப்ப்யாம் நம: । ஹ்ரீம்-தர்ஜனீப்ப்யாம் நம: । க்ரோம்-மத்யமாப்ப்யாம் நம: । ஆம்-அநாமிகாப்ப்யாம் நம: । ஹ்ரீம்-கநிஷ்ட்டிகாப்ப்யாம் நம: । க்ரோம் கரதல-கரப்ரு ஷ்ட்டாப்ப்யாம் நம: ।

ஆம்-ஹ்ருதயாய நம: । ஹ்ரீம்-சிரஸே ஸ்வாஹா । க்ரோம்-சிகாயை வஷட் । ஆம் கவசாய ஹும் । ஹ்ரீம்-நேத்ரத்ரயாய வௌஷட் । க்ரோம் - அஸ்த்ராய பட் । பூர்ப்புவஸ்ஸுவ ரோம் (திக்பந்தம்:) । த்யானம் ।

ரக்தாம்போதிஸ்த்த - போதோல்லஸ தருண-ஸரோஜாதிரூடா கராப்ஜை: பாசம் கோதண்ட-மிக்ஷூத்பவ - மளிகுண - மப்யங்குசம் பஞ்சபாணான் । பிப்ராணா-ஸ்ருக்-கபாலம் த்ரிநயன-லஸிதா பீனவக்ஷோருஹாட்ட்யா தேவீ பாலார்க்க - வர்ணா பவது ஸுககரீ ப்ராணசக்தி: பரா ந: ।

லம் - ப்ரதிவ்யா த்மிகாயை கந்த்தம் ஸமர்ப்பயாமி ।
ஹம் - ஆகாசாத்மிகாயை புஷ்பாணி ஸமர்பயாமி
யம் - வாய்வாத்மிகாயை தூபமாக்ராபயாமி ।
ரம் - அக்ன்யாத்மிகாயை தீபம் தர்ச்யாமி ।
வம் - அம்ருதாத்மிகாயை அம்ருதம் மஹாநைவேத்யம் நிவேதயாமி ।
ஸம் - ஸர்வாத்மிகாயை ஸர்வோபசார-பூஜாம் ஸமர்ப்பயாமி

ஓம் ஆம் ஹ்ரீம் க்ரோம் க்ரோம் ஹ்ரீம் ஆம் । ஹம்ஸஸ் ஸோऽஹம் ஸோऽஹம் ஹம்ஸ: । யரலவஶஷஸஹோம் । ஸ்ரீஸித்த்தி விநாயகஸ்ய ப்ராண இஹப்ராண: । ஜீவ இஹஸ்த்தித: । ஸர்வேந்த்ரியாணி வாங் மநஸ் த்வக் சக்ஷுஃ ஃப்ரோத்ர ஜிஹ்வா

க்ராண ப்ராணாபாந வ்யாநோதாந ஸமாநா: இஹாகத்ய ஸுகம் சிரம் திஷ்டந்து ஸ்வாஹா। ஸாந்நித்த்யம் குர்வந்து ஸ்வாஹா।

ஆம் ஹ்ரீம் க்ரோம் (என்ற பிராணசக்தி மந்திரத்தை 40 தடவைஜபித்து பிராணசக்திக்கு நெய்யும் தேனும் கலந்து நிவேதனம் செய்து) ப்ராணஶக்த்யை நம: ஆஜ்யமதூபஹாரம் நிவேதயாமி (என பூபோட்டு) பகவன் ! ஸித்த்திவிநாயக ! ஆவாஹிதோ பவ । ஸ்தா பிதோ பவ । ஸந்நிஹிதோ பவ । ஸந்நிருத்தோ பவ । அவகுண்டிதோ பவ । ஸுப்ரீதோ பவ । ஸுப்ரஸன்னோ பவ । ஸுமுகோ பவ । வரதோ பவ । ப்ரஸீதப்ரஸீத । தேவ ஸர்வ-ஜகந்நாத யாவத் பூஜா வஸானகம் । தாவத் த்வம் ப்ரீதிபாவேந பிம்பேऽஸ்மின் ஸந்நிதிம் குரு । என்று பிரார்த்திக்கவும்.

ஏகதந்தம் ஶூர்பகர்ணம் கஜவக்த்ரம் சதுர்புஜம் ।
பாஶாங்குஶதரம் தேவம் த்த்யாயாமி ஶ்ரீவிநாயகம் ॥

ஸித்த்திவிநாயகம் த்த்யாயாமி ।

ஆகச்ச்ச த்வம் ஜகந்நாத ஸுராஸுர நமஸ்க்ருத ।
அநாதநாத ஸர்வஜ்ஞ விக்க்நராஜ க்ருபாம் குரு ॥

ஸித்த்திவிநாயகம் ஆவாஹயாமி ।

விசித்ர ரத்ன கசிதம் திவ்யாபரண ஸம்யுதம் ।
ஸ்வர்ணஸிம்ஹாஸ நம் சாரு க்ருஹாண ஸுரபூஜித ॥

ஸித்த்திவிநாயகாய நம: ஆஸனம் ஸமர்பயாமி ।

ஸர்வதீர்த்தஸமுத்ப்பூதம் பாத்யம் கந்தாதிஸம்யுதம் ।
விக்க்நராஜ க்ருஹாணேதம் பகவன் பக்த வத்ஸல ॥

ஸித்த்திவிநாயகாய நம: பாத்யம் ஸமர்பயாமி ।

அர்க்க்யம் ச பலஸம்யுக்தம் கந்த்தபுஷ்பாக்ஷதைர் யுதம் ।
கணாத்த்யக்ஷ நமஸ்தேऽஸ்து க்ருஹாண கருணாநிதே ॥

ஸித்த்திவிநாயகாய நம: அர்க்க்யம் ஸமர்பயாமி ।

விநாயகநமஸ்துப்ப்யம் த்ரிதஶைரபி வந்தித ।
கங்கோதகேந ஶுத்த்தேந ஶீக்க்ரமாசமநம் குரு ।

ஸித்த்திவிநாயகாய நம: ஆசமநீயம் ஸமர்பயாமி ॥

தத்த்யாஜ்ய மதுஸம்யுக்தம் மதுபர்கம் மயாஹ்ருதம் ।
க்ருஹாணஸர்வலோகேஶ கஜவக்த்ரநமோஸ்துதே ॥

ஸித்த்திவிநாய காயநம: மதுபர்கம் ஸமர்பயாமி ।

கங்கா கோதாவரீ துங்கா யமுநா சஸரஸ்வதீ ।
தாஸாம் தோயமுமாபுத்ர ஸ்நாநார்த்தம் ப்ரதி க்ருஹ்யதாம் ॥
ஸித்த்திவிநாயகாய நம: ஸ்நானம் ஸமர்பயாமி ।

ஸ்நானாநந்தரம் ஆசமநீயம் ஸமர்பயாமி ।

ரக்தவஸ்த்ரமிதம் தேவ திவ்யகாஞ்சந ஸந்நிபம் ।
ஸர்வப்ரத க்ருஹாணேஶ லம்போதர ஹராத்மஜ ॥
ஸித்த்திவிநாயகாய நம: வஸ்த்ரம் ஸமர்பயாமி ।

ராஜதம் ப்ரம்ஹஸூத்ரஞ்ச காஞ்சநம் சோத்தரீயகம் ।
க்ருஹாண சாரு ஸர்வஜ்ஞ பக்தாநாம் வரதோ பவ ॥
ஸித்த்திவிநாயகாய நம: யஜ்ஞோபவீதம் ஸமர்பயாமி ।

நாநாவிதாநிதிவ்யாநி நாநாரத்நோ ஜ்வலாநி ச ।
பூஷணாநி க்ருஹாணேஶ பார்வதீப்ரியநந்தந ॥
ஸித்த்திவிநாயகாய நம: ஆபரணாநி ஸமர்பயாமி ।

கஸ்தூரீ சந்தனம் சைவ கேஸரேண ஸமந்விதம் ।
விலேபநம் ஸுரச்ரேஷ்ட்ட சந்தனம் ப்ரதிக்ருஹ்யதாம் ॥
ஸித்த்திவிநாயகாய நம: கந்த்தான் தாரயாமி ।

ரக்தாக்ஷதாம்ஶ்ச தேவேஶ க்ருஹாண த்விரதாநந ।
லலாடபலகே சந்த்ரஸ் தஸ்யோபர்யவதார்யதாம் ।
ஸித்த்திவிநாயகாய நம: அக்ஷதான் ஸமர்பயாமி ॥

மால்யாநி ச ஸுகந்த்தீநி மல்லிகாதீ நிவைப்ரபோ ।
மயாஹ்ருதாநி புஷ்பாணி ப்ரதிக்ருண்ஹீஷ்வ ஶாங்கர ।

கரவீரை: ஜாதிஸுமை: சம்பகைர்வகுலைஶ்ஶுபை: ।
ஶத பத்ரைஶ்ச கல்ஹாரை: அர்சாமி கணநாயகம் ॥
ஸித்திவிநாயகாய நம: புஷ்பை: பூஜயாமி ।

ஓம் ஸுமுகாய நம:
ஏகதந்தாய நம:
கபிலாய நம:
கஜகர்ணகாய நம:
லம்போதராய நம:
விகடாய நம:
விக்நராஜாய நம:
கணாதிபாய நம:

ஓம் தூமகேதவே நம:
கணாத்த்யக்ஷாய நம:
ப்பாலசந்த்ராய நம:
கஜாநநாய நம:
வக்ரதுண்டாய நம:
ஶூர்பகர்ணாய நம:
ஹேரம்பாய நம:
ஸ்கந்தபூர்வஜாய நம:

அங்கபூஜை

ஓம் கணேச்வராய நம:- பாதௌ பூஜயாமி (கால்களில்)
ஓம் விக்க்நராஜாய நம:- ஜானுநீ பூஜயாமி (முழங்கால்)
ஓம் ஆகுவாஹநாய நம:- ஊரூபூஜயாமி (தொடை)
ஓம் ஹேரம்பாய நம:- கடிம் பூஜயாமி (இடுப்பு)
ஓம் காமாரி ஸூநவே நம:- நாபிம் பூஜயாமி (தொப்புள்)
ஓம் லம்போதராய நம:- உதரம் பூஜயாமி (வயிறு)
ஓம் கௌரீஸுதாய நம:- ஸ்தனௌ பூஜயாமி (ஸ்தனங்கள்)
ஓம் கணநாதாய நம:- ஹ்ருதயம் பூஜயாமி (இதயம்)
ஓம் ஸ்தூலகண்ட்டாய நம:- கண்ட்டம் பூஜயாமி (கழுத்து)
ஓம் ஸ்கந்தாக்ரஜாய நம:- ஸ்கந்தௌ பூஜயாமி (தோள்)
ஓம் பாஶஹஸ்தாய நம:- ஹஸ்தான் பூஜயாமி (கைகள்)
ஓம் கஜவக்த்ராய நம: - வக்த்ரம் பூஜயாமி (முகம்)
ஓம் விக்க்நஹர்த்ரே நம:- லலாடம் பூஜயாமி (நெற்றி)
ஓம் ஸர்வேஶ்ராய நம:- ஶிர: பூஜயாமி (தலை)
ஓம் கணாதிபாய நம:- ஸர்வாங்கம் பூஜயாமி (உடல் முழுவதும்)

அங்கபூஜா (வேறு)

ஓம் ஸ்ரீகணேஶாய நம:- பாதௌ பூஜயாமி (கால்கள்)
ஓம் அகநாஶிநே நம:- ஜானூ பூஜயாமி (முழங்கால்)
ஓம் ஸுபாஹவே நம:- ஊரூ பூஜயாமி (தொடைகள்)
ஓம் விக்க்நஹர்த்ரே நம:- கடிம் பூஜயாமி (இடுப்பு)
ஓம் லம்போதராய நம:- உதரம் பூஜயாமி (வயிறு)
ஓம் கணேஶ்வராய நம:- ஹ்ருதயம் பூஜயாமி (இதயம்)
ஓம் கபிலாய நம:- ஸ்தநௌ பூஜயாமி (மார்பு)
ஓம் பார்த்திவாய நம:- புஜான் பூஜயாமி (மேல்கைகள்)
ஓம் மஞ்ஜுலகண்ட்டாய நம:- கண்ட்டம் பூஜயாமி (தொண்டை)
ஓம் ஸ்கந்தாக்ரஜாய நம:- ஸ்கந்த்தான் பூஜயாமி (தோள்கள்)
ஓம் பாஶஹஸ்தாய நம:- ஹஸ்தான் பூஜயாமி (முன்கைகள்)
ஓம் கஜவக்த்ராய நம:- முகம் பூஜயாமி (முகம்)

ஓம் விகடநேத்ராய நம:- நேத்ராணி பூஜயாமி (கண்கள்)

ஓம் கஜகர்ணாய நம:- கர்ணௌ பூஜயாமி (காதுகள்)

ஓம் ஸர்வஸித்த்திப்ரதாய நம:- ஶிர: பூஜயாமி (தலை)

ஓம் ஸர்வேஶ்வராயநம:- ஸர்வாங்கம் பூஜயாமி (உடல் முழுவதும்)

அங்கபூஜை - (வேறு)

ஓம் பார்வதீ நந்த நாய நம:- பாதௌபூஜயாமி (கால்கள்)

ஓம் கணேஶாய நம:- குல்ப்பே பூஜயாமி (கணுக்கால்கள்)

ஓம் ஜகத் தாத்ரே நம:- ஜங்க்கே பூஜயாமி (கணைக்கால்கள்)

ஓம் ஜகத்வல்லபாய நம:- ஜாநுநீ பூஜயாமி (முழங்கால்கள்)

ஓம் உமாபுத்ராய நம:- ஊரூ பூஜயாமி (தொடைகள்)

ஓம் விகடாய நம:- கடிம் பூஜயாமி (இடுப்பு)

ஓம் குஹாக்ரஜாய நம:- நாபிம் பூஜயாமி (தொப்புள்)

ஓம் மஹத்தமாய நம:- உதரம் பூஜயாமி (வயிறு)

ஓம் விநாயகாய நம:- வக்ஷ: பூஜயாமி (மார்பு)

ஓம் பாஶச்சிதே நம:- பார்ஶ்வே பூஜயாமி (விலா)

ஓம் ஹேரம்பாய நம:- ஹ்ருதயம் பூஜயாமி (இதயம்)

ஓம் மதோத்கடாய நம:- கண்ட்டம் பூஜயாமி (கழுத்து)

ஓம் ஸ்கந்தாக்ரஜாய நம:- ஸ்கந்த் தான் பூஜயாமி (தோள்கள்)

ஓம் ஹரஸுதாய நம:- ஹஸ்தான் பூஜயாமி (கைகள்)

ஓம் ப்ரம்ஹசாரிணே நம:- பாஹூன் பூஜயாமி (பின்கைகள்)

ஓம் ஸுமுகாய நம:- முகம் பூஜயாமி (முகம்)

ஓம் ஏகதந்தாய நம:- தந்தான் பூஜயாமி (பற்கள்)

ஓம் விக்நநேத்ரே நம:- நேத்ராணி பூஜயாமி (கண்கள்)

ஓம் ஶூர்பகர்ணாய நம:- கர்ணௌ பூஜயாமி (காதுகள்)

ஓம் ப்பால சந்த்ராய நம:- ப்பாலம் பூஜயாமி (நெற்றி)

ஓம் நாகாபரணாய நம:- நாஸிகாம் பூஜயாமி (மூக்கு)

ஓம் சிரந்த நாய நம:- சிபுகம் பூஜயாமி (முகவாய்)

ஓம் ஸ்த்தூலோஷ்ட்டாய நம:- ஓஷ்ட்டௌ பூஜயாமி (உதடுகள்)

ஓம் கலந்மதாய நம:- கண்டம் பூஜயாமி (கழுத்து)

ஓம் கபிலாய நம:- கசான் பூஜயாமி (கேசங்கள்)

ஓம் ஶிவப்ரியாய நம:- ஶிர: பூஜயாமி (தலை)

ஓம் ஸர்வ மங்களாஸுதாய நம:- ஸர்வாணி அங்காநி பூஜயாமி (உடல் முழுவதும்)

பத்ர பூஜை - (இலைகளால் அர்ச்சனை)

ஓம் ஸுமுகாய நம:- மாலதீபத்ரம் ஸமர்பயாமி (மல்லிகை இலை)

ஓம் கணாதிபாய நம:- ப்ருங்கராஜபத்ரம் ஸமர்பயாமி (கையாந்தரை)

ஓம் உமாபுத்ராய நம: - பில்வபத்ரம் ஸமர்பயாமி (வில்வ இலை)

ஓம் கஜாநநாய நம: - ஶ்வேததூர்வாம் ஸமர்பயாமி (வெள்ளை அருகு)

ஓம் லம்போதராய நம: - பதரீபத்ரம் ஸமர்பயாமி (இலந்தை)

ஓம் ஹரஸூநவே நம: - தத்தூரபத்ரம் ஸமர்பயாமி (ஊமத்தை இலை)

ஓம் கஜகர்ணகாய நம: - துலஸீபத்ரம் ஸமர்பயாமி (துளசி)

ஓம் வக்ரதுண்டாய நம: - ஶமீபத்ரம் ஸமர்பயாமி (வன்னியிலை)

ஓம் குஹாக்ரஜாய நம: - அபாமார்கபத்ரம் ஸமர்பயாமி (நாயுருவியிலை)

ஓம் ஏகதந்தாய நம: - ப்ருஹதீபத்ரம் ஸமர்பயாமி (கண்டங்கத்ரி)

ஓம் விகடாய நம: - கரவீரபத்ரம் ஸமர்பயாமி (அரளி இலை)

ஓம் கபிலாய நம: - அர்கபத்ரம் ஸமர்பயாமி (எருக்கிலை)

ஓம் கஜதந்தாய நம: - அர்ஜுநபத்ரம் ஸமர்பயாமி (மருதை)

ஓம் விக்நராஜாய நம: - விஷ்ணுக்ராந்தபத்ரம் ஸமர்பயாமி (விஷ்ணுக்ராந்தி

ஓம் வடவே நம: - தாடிமீபத்ரம் ஸமர்பயாமி (மாதுளை)

ஓம் ஸுராக்ரஜாய நம: - தேவதாருபத்ரம் ஸமர்பயாமி (தேவதாரு இலை)

ஓம் பாலசந்த்ராய நம: - மருவகபத்ரம் ஸமர்பயாமி (மரு)

ஓம் ஹேரம்பாய நம: - அஶ்வத்தபத்ரம் ஸமர்பயாமி (அரசிலை)

ஓம் சதுர்ப்புஜாய நம: - ஜாதீபத்ரம் ஸமர்பயாமி (ஜாதி இலை)

ஓம் விநாயகாய நம: - கேதகீபத்ரம் ஸமர்பயாமி (தாழை இலை)

ஓம் ஸர்வேஶ்வராய நம: - அகஸ்த்யபத்ரம் ஸமர்பயாமி (அகத்தி இலை)

*(அந்தந்த இலை கிடைக்காவிடத்தில் அருகம்புல் வில்வம், மந்தாரை இலை, வன்னி இலை அர்ப்பணம் செய்யலாம்)*

பத்ர பூஜை - (வேறு)

உமா புத்ராய நம: - மாசீபத்ரம் ஸமர்பயாமி (மாசிப்பச்சை)

ஹேரம்பாய நம: - ப்ருஹதீபத்ரம் ஸமர்பயாமி (கண்டங்கத்திரி)

லம்போதராய நம: - பில்வபத்ரம் ஸமர்பயாமி (வில்வம்)

த்விரதா நநாய நம: - தூர்வாம் ஸமர்பயாமி (அருகு)

தூமகேதவே நம: - தத்தூரபத்ரம் ஸமர்பயாமி (ஊமத்தை இலை)

ப்ருஹதே நம: - பதரீபத்ரம் ஸமர்பயாமி (இலந்தை இலை)

அபவர்கதாய நம: - அபாமார்கபத்ரம் ஸமர்பயாமி (நாயுருவி இலை)

த்வைமாதுராய நம: - துலஸீபத்ரம் ஸமர்பயாமி (துளசி)

சிரந்தநாய நம: - சூதபத்ரம் ஸமர்பயாமி (மாவிலை)

கபிலாய நம: - கரவீரபத்ரம் ஸமர்பயாமி (அரளி இலை)

விஷ்ணுஸ்துதாய நம: - விஷ்ணுக்ராந்தபத்ரம் ஸமர்பயாமி (விஷ்ணுக்கிராந்தி)

அமலாய நம: - ஆமலகபத்ரம் ஸமர்பயாமி (நெல்லி இலை)

மஹதே நம: - மரு வகபத்ரம் ஸமர்பயாமி (மருக்கொழுந்து)

ஸிந்த்துராய நம: - ஸிந்து வாரபத்ரம் ஸமர்பயாமி (கருநொச்சி)

கஜாநநாய நம: - ஜாதீபத்ரம் ஸமர்பயாமி (ஜாதி மல்லியிலை)

கண்டகலன் மதாய நம: - கண்டலீபத்ரம் ஸமர்பயாமி (வெள்ளருகு)

சங்கரீப்ரியாய நம: - சமீபத்ரம் ஸமர்பயாமி (வன்னி இலை)

ப்ப்ருங்கராஜத் கடாய நம: - ப்ருங்கராஜபத்ரம் ஸமர்பயாமி
(கரிகலாங்கண்ணியிலை)

அர்ஜுநதந்தாய நம: - அர்ஜுனபத்ரம் ஸமர்யாமி (மருது இலை)

அர்கப்ரபாய நம: - அர்க்கபத்ரம் ஸமர்யாமி (எருக்கிலை)

புஷ்ப பூஜா

பஞ்சாஸ்யகணபதயே நம: - புந்நாகபுஷ்பம் ஸமர்பயாமி (புன்னைப்பூ)

மஹாகணபதயே நம: - மந்தாரபுஷ்பம் ஸமர்பயாமி (மந்தாரைப்பூ)

தீரகணபதயே நம: - தாடிமீ புஷ்பம் ஸமர்பயாமி (மாதுளம்பூ)

விஷ்வக்ஸேந கணபதயே நம: - வகுலபுஷ்பம் ஸமர்பயாமி (மகிழம்பூ)

ஆமோத கணபதயே நம: - அம்ருணால புஷ்பம் ஸமர்பயாமி
(வெண்தாமரை)

ப்ரமத கணபதயே நம: - பாடலீபுஷ்பம் ஸமர்பயாமி (பாதிரிப்பூ)
ருத்ர கணபதயே நம: - த்ரோணபுஷ்பம் ஸமர்பயாமி (தும்பைப்பூ)
வித்யா கணபதயே நம: - தத்தூரபுஷ்பம் ஸமர்பயாமி (ஊமத்தம்பூ)
விக்ந கணபதயே நம: - சம்பகபுஷ்பம் ஸமர்பயாமி (சம்பகப்பூ)
துரிதகணபதயே நம: - ரஸாலபுஷ்பம் ஸமர்பயாமி (மாம்பூ)
காமிதார்த்தப்ரத கணபதயே நம: - கேதகீபுஷ்பம் ஸமர்பயாமி (தாழம்பூ)
ஸம்மோஹ கணபதயே நம: - மாதவீபுஷ்பம் ஸமர்பயாமி (முல்லைப்பூ)
விஷ்ணு கணபதயே நம: - சம்யாகபுஷ்பம் ஸமர்பயாமி (கொன்றைப்பூ)
ஈஶ கணபதயே நம: - அர்கபுஷ்பம் ஸமர்பயாமி (எருக்கம்பூ)
கஜாஸ்ய கணபதயே நம: - கல்ஹாரபுஷ்பம் ஸமர்பயாமி (செங்கழுநீர்)
ஸர்வஸித்த்தி கணபதயே நம: - ஸேவந்திகாபுஷ்பம் ஸமர்பயாமி (செவந்தி)
வீரகணபதயேநம: - பில்வபுஷ்பம் ஸமர்பயாமி பில்வப்பூ)
கந்தர்ப கணபதயே நம: - கர வீரபுஷ்பம் ஸமர்பயாமி (அரளிப்பூ)
உச்சிஷ்ட கணபதயே நம: - குந்தபுஷ்பம் ஸமர்பயாமி (முல்லைப்பூ)
ப்ரம்ஹகணபதயே நம: - பாரிஜாதபுஷ்பம் ஸமர்பயாமி (பவழமல்லிப்பூ)
ஜ்ஞான கணபதயே நம: - ஜாதீபுஷ்பம் ஸமர்பயாமி (ஜாதிப்பூ)

புஷ்ப பூஜா (வேறு)

கணாதிபாய நம: - கேதகீபுஷ்பம் ஸமர்பயாமி (தாழம்பூ)
இபவக்த்ராய நம: - சம்பகபுஷ்பம் ஸமர்பயாமி (சம்பகம்)
லம்போதராய நம: - பூகபுஷ்பம் ஸமர்பயாமி (பாக்குப்பூ)
வடவே நம: - கோவிந்தபுஷ்பம் ஸமர்பயாமி (சங்குப்பூ)
ஸித்த்திவிநாயகாய நம: - ஜாதீபுஷ்பம் ஸமர்பயாமி (ஜாதிப்பூ)
நாகயஜ்ஞோப வீதிநே நம: - கரவீரபுஷ்பம் ஸமர்பயாமி (அரளி)
கஜகர்ணகாய நம: - தத்தூரபுஷ்பம் ஸமர்பயாமி (ஊமத்தை)
பக்தப்ரியாய நம: - ஶதபுஷ்பம் ஸமர்பயாமி (சதகுப்பைப்பூ)
பார்வதீப்ரியாய நம: - பாரிஜாதபுஷ்பம் ஸமர்பயாமி (பவழமல்லி)
விக்நராஜாய நம: - வகுலபுஷ்பம் ஸமர்பயாமி (மகிழம்பூ)

குமாரகுரவே நம: - விஷ்ணுக்ராந்தி புஷ்பம் ஸமர்பயாமி (விஷ்ணு க்ராந்திப்பூ)

அகநாஶநாய நம: - மல்லிகா புஷ்பம் ஸமர்பயாமி (மல்லி)

ஸர்வஶக்தி காய நம: - கிரிகர்ணிகா புஷ்பம் ஸமர்பயாமி (மலேயத்திப்பூ)

ப்பால சந்த்ராய நம: - பத்மபுஷ்பம் ஸமர்பயாமி (தாமரை)

ருத்ரப்ரியாய நம: - ரக்தோத்பல புஷ்பம் ஸமர்பயாமி (செவ்வல்லி)

விநாயகாய நம:- இந்தீவரபுஷ்பம் ஸமர்பயாமி (நீல அல்லி)

மூஷிகவாஹநாய நம: - துலஸீ புஷ்பம் ஸமர்பயாமி (துளசிப்பூ)

அவ்யக்தாய நம: - நந்த்யாவர்தபுஷ்பம் ஸமர்பயாமி (நந்தியாவட்டை)

நாகாதிபதயே நம: - நாகசம்பகபுஷ்பம் ஸமர்பயாமி (புன்னைகப்பூ)

விக்க்நநாயகாய நம: - தாடிமபுஷ்பம் ஸமர்பயாமி (மாதுளம்பூ)

வக்ரதுண்டாய நம: - கல்ஹார புஷ்பம் ஸமர்பயாமி (கழுநீர்)

ஸித்த்தி விநாயகாய நம: - ஸர்வாணி புஷ்பாணி ஸமர்பயாமி (எல்லா புஷ்பங்கள்)

*(கிடைக்காத புஷ்பங்களுக்கு மாற்றுகத் தாமரை சேர்க்கலாம்)*

தூர்வாயுக்ம பூஜா *(இரு அருகம் புற்களைக் கொண்டு அர்ச்சனை)*

*கணாத்த்யக்ஷ மஹாதேவ ஶிவபுத்ராபயப்ரத ।*
*தூர்வாயுக்மம் க்ருஹாணேஶ கணாதிப நமோऽஸ்துதே ॥*

*கணாதிபாய நம: - தூர்வாயுக்மம் ஸமர்பயாமி ।*

*பதிர் கணாநாம் ஸர்வேஷாம் அம்பிகா கர்ப்பஸம்ப்பவ ।*
*தூர்வாயுக்மம் க்ருஹாணேஶ உமாபுத்ர நமோऽஸ்துதே॥*

*உமாபுத்ராய நம: தூர்வாயுக்மம் ஸமர்பயாமி ।*

*பக்தாநாம் ஸ்மரணாதேவ ஸர்வாக க்ஷயக்ருத்விபு: ।*
*தூர்வாயுக்மம் க்ருஹாணேஶ அகநாஶ நமோऽஸ்துதே ॥*

*அகநாஶநாய நம: - தூர்வாயுக்மம் ஸமர்பயாமி ।*

*ந்ருபாணாம் யுத்த்தஸமயே பஜதாமபயப்ரத ।*
*தூர்வாயுக்மம் க்ருஹாணேஶ விநாயக நமோऽஸ்துதே ॥*

*விநாயகாய நம: - தூர்வாயுக்மம் ஸமர்பயாமி ।*

ஜநிதோ தேவதார்த்தாய தாராஸுரவதே ப்ரபு: ।
தூர்வாயுக்மம் க்ருஹாணேஶ ஈஶபுத்ர நமோऽஸ்துதே ॥

ஈஶபுத்ராய நம: - தூர்வாயுக்மம் ஸமர்பயாமி ।

ஸ்கந்தாக்ரஜாத பூதேஶ லம்போதர கஜாநந ।
தூர்வாயுக்மம் க்ருஹாணேஶ ஸர்வஸித்திப்ரதாயக ॥

ஸர்வஸித்திப்ரதாய நம: - தூர்வாயுக்மம் ஸ்மர்பயாமி ।

ராக்ஷஸாநாம் விநாஶாய தந்தாயுததராபவ ।
தூர்வாயுக்மம் க்ருஹாணேஶ ஏகதந்த நமோऽஸ்துதே ॥

ஏகதந்தாய நம: - தூர்வாயுக்மம் ஸமர்பயாமி ।

உமா மஹேஶயோர் த்ருஷ்ட்யா ஜாதோ ஸௌ கஜவக்த்ரக: ।
தூர்வாயுக்மம் க்ருஹாணேஶ இபவக்த்ர நமோऽஸ்துதே ॥

இபவக்த்ராய நம: - தூர்வாயுக்மம் ஸமர்பயாமி ।

மூஷிகோத்தம மாருஹ்ய ஜிதாதைத்யா மஹாஹவே ।
தூர்வாயுக்மம் க்ருஹாணேஶ நமோமூஷிகவாஹந ॥

மூஷிகவாஹநாய நம: - தூர்வாயுக்மம் ஸமர்பயாமி ।

அக்நி ப்பூர்பாஹுலேயஸ்ய குருமுக்யோ பவாந்ப்ரபோ ।
தூர்வாயுக்மம் க்ருஹாணேஶ குமாரகுரவே நம: ॥

குமாரகுரவே நம: - தூர்வாயுக்மம் ஸமர்பயாமி ।

(கணாதிப நமஸ்தேऽஸ்து உமாபுத்ராகநாஶந ।
விநாயகேஶபுத்ராவ ஸர்வஸித்திப்ரதாயக॥

ஏகதந்தேபவக்த்ராவ ஸதாமூஷிகவாஹந ।
நம: குமாரகுரவே தூர்வாயுக்மம் க்ருஹாணபோ: ॥)

தூர்வாயுக்ம பூஜா - வேறு

(ஓம் - நம: - தூர்வாயுக்மம் ஸமர்பயாமி)

ஓம் 1. கணாதிபாய நம: 6. ஸர்வஸித்திப்ரதாய
2. பாஶாங்குஶதராய 7. ஏகதந்தாய
3. ஆக்குவாஹநாய 8. இபவக்த்ராய
4. விநாயகாய 9. மூஷிகவாஹநாய
5. ஈஶபுத்ராய 10. குமாரகுரவே

11. கபிலவர்ணாய
12. ப்ரம்ஹசாரிணே
13. மோதகஹஸ்தாய
14. ஸுரஶ்ரேஷ்ட்டாய
15. கஜநாஸிகாய
16. கபித்த்தபலப்ரியாய
17. கஜமுகாய
18. ஸுப்ரஸந்நாய
19. ஸுராக்ரஜாய
20. உமாபுத்ராய
21. ஸ்கந்தப்ரியாய

## கணபதி துவாதசநாமாவளி

ஓம் - நம:

| | | |
|---|---|---|
| விக்க்நராஜாய | ப்பாலசந்த்ராய | கணபதயே |
| வக்ரதுண்டாய | க்ருஷ்ணபிங்களாய | லம்போதராய |
| தூம்ரவர்ணாய | விநாயகாய | ஹஸ்திமுகாய |
| எகதம்ஷ்ட்ராய | கஜகர்ணகாய | விகடாய |

## ஶ்ரீ கணேஶாஷ்டோத்தரஶத நாமாவளி

ஓம் — நம:

| | | |
|---|---|---|
| கணேஶ்வராய | வாணீபலாய | ப்ரும்ஹசாரிணே |
| விக்க்நராஜாய | ஸர்வஸித்த்தி ப்ரதாய | கஜாநநாய |
| கௌரீபுத்ராய | ஶர்வதநயாய | த்வைமாதுராய |
| விநாயகாய | ஶர்வரீபதயே | முனிஸ்துத்யாய |
| ஸ்கந்தாக்ரஜாய | ஸர்வாத்மகாய | பக்தவிக்க்நவி நாஶகாய |
| அவ்யயாய | ஸ்ருஷ்டிகர்த்ரே | ஏகதந்தாய |
| பூதாய | தேவாநீகார்சிதாய | சதுர்பாஹவே 30 |
| தக்ஷாய | ஶிவாய 20 | சதுராய |
| அத்த்யக்ஷாய | ஸித்த்தாய | ஶக்திஸம்யுதாய |
| த்விஜப்ரியாய 10 | புத்த்திப்ரியாய | லம்போதராய |
| அக்நிகர்வச்சிதே | ஶாந்தாய | ஶூர்பகர்ணாய |
| இந்த்ரஶ்ரீப்ரியாய | | |

ஹேரம்பாய
ப்ரம்ஹவித்தமாய
காலாய
க்ருஹபதயே
காமிநே
ஸோமஸூர்யாக்
நிலோசநாய
பாஶாங்குஶதராய
சண்டாய
குணாதீதாய
நிரஞ்ஜநாய
அகல்மஷாய
ஸ்வயம்ஸித்தாய
ஸித்தார்சிதபதாம்
புஜாய
பீஜாபூரகராய
அவ்யக்தாய
வரதாய 50
ஶாஶ்வதாய
க்ருதிநே
வித்வத்ப்ரியாய
வீதராகாய
கதிநே
சக்ரிணே
இக்ஷுசாபவதே
அப்ஜோத்பலகராய
அவ்யக்தாய
ஸ்ரீதாய 60
ஸ்ரீபதிஸ்துதிஹர்
ஷிதாய
குலாத்ரிபேத்ரே
ஜடிலாய
சந்த்ரசூடாய
அமரேஶ்வராய
நாகோபவீதிநே
ஸ்ரீகண்ட்டாய
அர்சிதாய
ராமார்சிதாய
வ்ரதிநே 70
ஸ்த்தூல
கண்ட்டாய
மாயாகர்த்ரே
ஸாமகோஷப்ரியாய
பராய
ஸ்த்தூலதுண்டாய
அக்ரண்யை
தீராய
க்ராமண்யை
கணபாய
ஸ்த்திராய 80
வ்ருத்த்திதாய
ஸுபகாய
ஶூராய
வாகீஶாய
ஸித்த்திதாயகாய
தூர்வாபில்வ
ப்ரியாய
பாபஹாரிணே
ஶாந்தாய
ஸமாஹிதாய
ஆஶ்ரிதஸ்ரீ
ப்ரதாய 90
ஸௌம்யாய
பக்தகாங்க்ஷி
ததாயகாய
அச்யுதாய
கேவலஸித்த்தாய
ஸச்சிதாநந்த
விக்ரஹாய
ஜ்ஞானிணே
மாயா ஸுதாய
தாந்தாய
ப்ரம்ஹிஷ்ட்டாய
ப்பயவர்ஜிதாய 100
ப்ரமத்ததைத்ய
பயப்ரதாய
வ்யக்தமூர்தயே
பார்வதீஶங்கரோத்
ஸங்ககேலநோத்ஸு
கலாலஸாய
ஸமஸ்த ஜகதாதாராய
வரமூஷிக வாஹநாய
ஹ்ருஷ்டசித்தாய
ஸர்வாத்மநே
ஸர்வஸித்த்தி
ப்ரதாயகாய 108

*தஶாங்கம் குக்குலும் தூபம் ஸுகந்தம் ச மநோஹரம்।*
*க்ருஹாண ஸர்வதேவஶ உமாபுத்ர நமோऽஸ்து தே ॥*

*ஸித்திவிநாயகாய நம: தூபம் ஸமர்பயாமி ।*

*ஸர்வஜ்ஞ ஸர்வலோகேஶ த்ரைலோக்ய திமிராபஹம் ।*
*க்ருஹாண மங்களம் தீபம் ருத்ரப்ரிய நமோऽஸ்து தே ॥*

*ஸித்திவிநாயகாய நம: தீபம் ஸமர்பயாமி ।*

*நைவேத்யம் க்ருஹ்யதாம் தேவ பக்திம் மேஹ்யசலாம் குரு ।*
*ஈப்ஸிதம் மேவரம் தேஹி பரத்ரச பராம் கதிம் ॥*

*நாநாகாத்ய மிதம் திவ்யம் துஷ்ட்யர்த்தம் தே நிவேதிதம் ।*
*மயா பக்த்யா ஶிவாபுத்ர க்ருஹாண கணநாயக ॥*

*ஸித்திவிநாயகாய நம: மஹாநைவேத்யம் மோதகான் லட்டுகான் நாநா பலாநி ச ஸமர்பயாமி ।*

பல(பழ)பூஜை

கணாதிபாய நம: - நாரிகேளபலம் ஸமர்பயாமி (தேங்காய்)
பக்தப்ரியாய நம: - ஜம்பீரபலம் ஸமர்பயாமி (எலு மிச்சை)
இபவக்த்ராய நம: - இக்ஷுதண்டம் ஸமர்பயாமி (கரும்பு)
கம்புக்ரீவாய நம: - கபித்தபலம் ஸமர்பயாமி (விளாம்பழம்)
லம்போதராய நம: - கதலீபலம் ஸமர்பயாமி (வாழைப்பழம்)
கபிலாய நம: - கர்கடீபலம் ஸமர்பயாமி (வெள்ளரிப்பழம்)
வடவே நம: - தாடிமபலம் ஸமர்பயாமி (மாதுளை)

*பூகீபலம் மஹத்திவ்யம் நாகவல்லீதளைர்யுதம் ।*
*கர்பூரைலஸமாயுக்தம் தாம்பூலம் ப்ரதிக்ருஹ்யதாம் ॥*

*ஸித்த்திவிநாயகாய நம: தாம்பூலம் ஸமர்பயாமி ।*

*சந்த்ராதித்யௌ சதாராணி வித்யுதக்னிஸ்ததைவ ச।*
*த்வமேவ ஸர்வதேஜாம்ஸி ஆர்திக்யம் ப்ரதிக்ருஹ்யதாம் ॥*

*ஸித்த்திவிநாயகாய நம: கர்பூர நீராஜநம் ஸமர்பயாமி ।*

*விக்நேஶ்வர விஶாலாக்ஷ ஸர்வாபீஷ்டபலப்ரத ।*
*ப்ரதக்ஷிணம் கரோமி த்வாம் ஸர்வான் காமான் ப்ரயச்சமே ॥*

*ஸித்திவிநாயகாய நம: ப்ரதக்ஷிணம் ஸமர்பயாமி ।*

*நமஸ்தே விக்ந ஸம் ஹர்த்ரே நமோ பக்தேப்ஸிதப்ரத*
*நமஸ்தே தேவதேவேஶ நமஸ்தே கணநாயக ।*

ஸித்த்திவிநாயகாய நம: - நமஸ்காரான் ஸமர்பயாமி।
விநாயகேஶபுத்ரேஶ கணராஜ ஸுரோத்தம।
தேஹிமேஸகலான் போகான் வந்தேஸித்திவிநாயக॥
ஸித்த்திவிநாயகாய நம: - மந்த்ரபுஷ்பம் ஸமர்பயாமி।

புஷ்பாஞ்ஜலி

(ஓம் - நம: - புஷ்பாஞ்ஜலிம் ஸமர்பயாமி)

| | | |
|---|---|---|
| கஜாநநாய | ஶூர்பகர்ணாய | ஸர்வஸித்த்திப்ரதாய |
| ஏகதந்தாய | அநந்தாபரணாய | கணாத்யக்ஷாய |
| கபிலாய | கல்பத்ருமாய | வக்ரதுண்டாய |
| ஸ்வர்ணதேஹாய | ருத்ரப்ரியாய | ஹேரம்பாய |
| உமாஸுதாய | கஜவக்த்ராய | மூஷிகவாஹநாய |
| அகநாஶநாய | கபிலாய | குமாரகுரவே |
| லம்போதராய | ப்பாலசந்த்ராய | |

விநாயக கணேஶாந ஸர்வதேவ நமஸ்க்ருத।
பார்வதீப்ரிய விக்க்நேஶ மம விக்க்நம் விநாஶய॥

ஸித்திவிநாயகாய நம: ச்சத்ரம் ஸமர்பயாமி। சாமரம் வீஜயாமி। ந்ருத்தம் ப்ர தர்ஶயாமி। வாத்யம் க்கோஷயாமி । ஆந்தோலிகாம் ஆரோபயாமி। ஸமஸ்தராஜோபசாரான் ஸமர்பயாமி।

அர்க்க்யப்ரதானம் (கையில் அக்ஷதை, பூ வுடன் பால் விட்டுக் கொண்டு.

அர்க்க்யம் க்ருஹாணஹேரம்ப வரப்ரத விநாயக।
கந்த்தபுஷ்பாக்ஷதைர்யுக்தம் பக்த்யாதத்தம் மயாப்ரபோ।
ஸ்ரீ ஸித்த்திவிநாயகாய நம:, இதமர்க்க்யம் (அர்க்கியம் விடவும்) இதமர்க்க்யம் (அர்க்கியம்விடவும்) இதமர்க்க்யம் (அர்க்கியம் விடவும்)

நமஸ்துப்ப்யம் கணேஶாய நமஸ்தே விக்க்நநாயக।
புநரர்க்க்யம் ப்ரதாஸ்யாமி க்ருஹாணகணநாயக॥

ஸித்த்திவிநாயகாய நம: இதமர்க்க்யம், இதமர்க்க்யம், இதமர்க்க்யம் (என 3 தடவை அர்க்கியம் விடவும்)

நமஸ்தே பிந்நதந்தாய நமஸ்தே ஹர ஸூநவே।
இதமர்க்க்யம் ப்ரதாஸ்யாமி ஸங்க்ருஹாண கணாதிப॥

*ஸித்த்திவிநாயகாய நம: - இதமர்க்க்யம் இதமர்க்க்யம் இதமர்க்க்யம் என 3 தடவை அர்க்கியம் விடவும்.*

கௌர்யங்கமலஸம்ப்பூத ஜ்யேஷ்ட்ட ஸ்வாமின் விநாயக।
கணேஶ்வர க்ருஹாணார்க்க்யம் கஜானன நமோऽஸ்துதே॥

ஸ்ரீஸித்த்திவிநாயகாய நம:- இதமர்க்க்யம், இதமர்க்க்யம், இதமர்க்க்யம் *என 3 தடவை அர்க்க்யம் விடவும்.* அநேந பூஜநேந பகவான் ஸர்வாத்மக: ஸ்ரீ ஸித்த்திவிநாயக: ப்ரீயதாம்। ஓம் தத்ஸத் ப்ரம் ஹார்பண மஸ்து.

# मयूरेश्वरपूजा

मयूरेश्वरपुरे चतुर्षु द्वारेषु अधिष्ठितानां देवतानां पूजनपुरस्सरं मयूरेश्वरपूजा भाद्रपदशुक्लप्रतिपदमारभ्य चतुर्थीपर्यन्तं आचर्यते। दाक्षिणात्यैरपि गाणपतैः कैश्चित् अयं पूजाक्रमोऽनुष्ठीयते।

(द्वाराध्यक्षविषये मुद्गलपुराणे। माञ्जारी प्राच्यां, (आत्मनो जारभावं तु दर्शयन्ती निरन्तरम्। मोहयित्वा क्रीडति तेन स्वयं शक्तिरुत्तमा। माञ्जारी सा समाख्याता मां प्रति जारदर्शिनी। गणपः क्रीडति द्वन्द्वविहारस्थः तयासह।) विरजा दक्षिणस्याम्। आश्रया प्रतीच्याम्। चतुर्थिका उत्तरस्यामिति विशेषः। भगवतो दिव्यं भुवनं स्वानन्दभुवनमिति, भूमौ तदेव मयूरेश्वर मिति (मोरेगांव) इति महाराष्ट्रेषु प्रसिद्धम्। माञ्जारीं मार्जारीं वदन्ति केचित्। अत्रतु माञ्जारी (मार्जारी) प्राच्यां, आश्रया दक्षिणस्यां, भोगदा प्रतीच्यां, कामदा उत्तरस्यामिति पूजाक्रमो दृश्यते संप्रदायगतः।

पूजाक्रमः-

गुरुवन्दनम्। गणपति वन्दनम्। सङ्कल्पः- ममोपात्तसमस्तदुरितक्षयद्वारा परमेश्वर प्रीत्यर्थं श्रीमयूरेश्वरानु ग्रहसिद्ध्यर्थं... एकभक्तव्रतग्रहण पूर्वकं भाद्रपदशुक्ल प्रतिपद मारभ्य चतुर्थी पर्यन्तं चतुर्दिन साध्यां मयूरेश्वर पुर चतुर्द्वाराधिष्ठित देवतापूजा पूर्विकां मयूरेश्वर पूजां करिष्ये। (अप उपस्पृश्य। हरिद्राबिम्बे विघ्नेश्वरपूजा। ग्रहप्रीतिः प्रथमदिने) अस्यां प्रतिपदि मयूरेश्वर पुरपूर्वद्वाराध्यक्षायाः मांजारीदेव्याः पूजां करिष्ये (कलशपूजा)

## प्रथमायां पूर्वद्वाराध्यक्षपूजा

प्राग्द्वाराधिष्ठितां देवीं भक्तपापविमार्जिकाम्।
मां जारीं कलयाम्यत्र व्रतस्य परिपूर्तये॥

पूर्वद्वाराध्यक्षां मांजारीं (मार्जारीं) ध्यायामि।
आवाहयामि माञ्जारीं मयूरेशाज्ञया स्थिताम्।
मयूरेशार्चनार्थाय अनुज्ञां कुरु मे शिवे॥ आवाहयामि।
मयूरेशपुरः पूर्वद्वारे रत्नविनिर्मितम्।
सिंहासनमिदं क्लृप्तं आतिष्ठार्चां गृहाण मे॥ आसनं।
पाद्यं गङ्गापयः क्लृप्तं यवदूर्वाभिरन्वितम्।
ददामि सुभगे देवि पङ्कक्षालनमस्तु मे। पाद्यं।
अर्घ्यं मांजारिके देवि गन्धपुष्पा दिमिश्रितम्।
हस्ते गृहीत्वा मत्पापं संप्रमार्ज्य कृपां कुरु॥ अर्घ्यं।
सुगन्धवासितं तोयं मधुपर्कं पुरस्तनम्।
ददाम्याचमनं तुभ्यं कुरु मांजारि शोभनम्॥ आचमनं।
मधुपर्कं मयानीतं दधिमध्वाज्यसंयुतम्।
मांजारिके प्रतीच्छ त्वं मम पापापनुत्तये॥ मधुपर्कं।
मधुक्षीरसिताद्राक्षासर्पिर्भिः संस्कृतं नवम्।
पञ्चामृतमिदं देवि स्नानाय प्रतिगृह्यताम्॥ पञ्चामृतस्नानं।
कृष्णानदी समानीतं गन्धतैलादि पूर्वकम्।
जलं स्नानाय संक्लृप्तं स्नाहि मांजारिके सुखम्॥ स्नानं, आचमनं।
शुक्लाम्बरयुगं सूक्ष्मं कार्पासपरिनिर्मितम्।
परिवीय्य मयूरेशपदभक्तं विधेहि माम्॥ वस्त्रं।
कटकाङ्गदकेयूरहार कङ्कणनूपुरैः।
अलङ्कुरुष्व मांजारि मम संकल्पभूषणैः॥ आभरणानि।

गन्धं ददामि सुरभिं श्रीखण्डागरुमिश्रितम्।
विलेपनाय ते देवि गृह्यतां सुरपूजिते ॥ गन्धं।

जलस्थलरुहैः पुष्पैः मालां देवविनिर्मिताम्।
प्रतिगृह्याशु मांजारि तुष्टा देवं प्रदर्शय ॥ मालिकां।

जातीचंपकपुन्नाग कनकाह्वय कैतकैः।
मल्लिकामालती पुष्पैः पूजयामि सुरेश्वरि ॥ पुष्पाणि ॥

अङ्गपूजा - (ओं - नमः - पूजयामि)

मांजार्यै - पादौ। गूढगुल्फायै - गुल्फौ। दीर्घजङ्घायै - जङ्घे। मुकुटजानुकायै - जानुनी। रंभोरवे - ऊरू। शुभकटयै - कटिं। गंभीरनाभये - नाभिं कृशोदरायै - उदरं। पृथुवक्षसे - वक्षः। उन्नतकुचायै - कुचौ। वेत्रहस्तायै - हस्तौ। कम्बुकण्ठयै - कण्ठं। शुचिस्मितायै - वक्त्रं। दीर्घनासायै - नासिकां। विशाल नेत्रायै - नेत्रे। श्रीकर्णायै - कर्णौ। तिलकभूषायै - ललाटं। द्वारेश्यै - शिरः। मांजार्यै - सर्वाङ्गं।

धूपं गृहाण हेरम्बपुरप्राग्द्वारदेवते।
गुग्गुल्वगरु संमिश्रं ददाम्युत्तममादरात् ॥ धूपं।

दीपं ददामि ते दिव्यं वर्तित्रय सुयोजितम्।
मङ्गलार्थाय सुज्योतिः गृह्यतां देवदूतिके ॥ दीपं।

पायसापूपकृसरचित्रान्नैः फलमिश्रितैः।
नैवेद्यं ते प्रदास्यामि परितृप्ता भवेश्वरि ॥ नैवेद्यं।

पूगीफलसमायुक्तं नागवल्लीदलैर्युतम्।
कर्पूरचूर्ण संयुक्तं ताम्बूलं प्रतिगृह्यताम् ॥ ताम्बूलं।

नीराजनं प्रदास्यामि पञ्चभिर्घृतवर्तिभिः।
सर्वमंगल लाभायाप्यपराधक्षमाय च ॥ नीराजनं।

प्रदक्षिणनमस्कारान्।

मांजारि त्वदनुज्ञया मम मयूरेशस्य सन्दर्शनं
तत्पादाम्बुरुहार्चनं भगवतः कारुण्य दृष्टिर्मयि।
भूया त्प्रोष्ठपदस्य पूर्वदिनतः तत्राचतुर्थीदिनं
पूजार्थं मम योग्यताऽस्त्विति परं याचेऽद्य पूर्वाधिपे। (प्रार्थना।)
अनया पूजया मयूरेशपुर पूर्वद्वाराध्यक्षा मांजारीदेवता प्रीयताम्।

## पूर्वद्वारे रमारमेशपूजा।

सङ्कल्पः - परमेश्वर प्रीत्यर्थं मयूरेशपुर पूर्वाङ्ग देवतयोः रमारमेशयोः पूजां करिष्ये।
(कलश-शंखपूजे।)

रमारमेशौ कलये प्राग्द्वाराङ्गतया स्थितौ।
आद्ये दिने मयूरेशपूजाङ्गत्वेन सत्कृतौ॥

रमा रमेशौ ध्यायामि।

आवाहयामि लक्ष्मीशौ सर्वसंपत्प्रदौ नृणम्।
मयूरेशाज्ञया पूर्वद्वारदेशमुपाश्रितौ॥ आवाहयामि।

रत्नसिंहासनं देवौ उपवेशाय कल्पितौ।
आस्तं मदीयपूजार्थं कुरुतं च कृपां मयि॥ आसनं।

पाद्यमाद्यन्त रहितौ गृह्णीतं साक्षतं शुभम्।
पादप्रक्षालनार्थाय द्विषन्नाशनं अस्तु मे॥ पाद्यं॥

गन्धपुष्पकुशैर्मिश्रं गाङ्गतोयमिदं शुभम्।
अच्छिद्रा सन्ततिर्मे स्यात् गृह्णीतं हस्तपङ्कजे॥ अर्घ्यं।

आचम्येतां जगद्वन्द्यौ शुद्धतोयेन कल्पितम्।
ददाम्याचमनार्थाय मधुपर्काङ्गमुत्तमम्॥ आचमनम्।

दधिमध्वाज्यसंयुक्तं मधुपर्कं मया हृतम्।
लक्ष्मीनारायणावद्य गृह्णीतं परया मुदा॥ मधुपर्कं।

क्षीराज्यमधु मृद्वीकाशर्कराफलकल्पितम्।
पञ्चामृतस्नानमिदं कुरुतं प्रीतिपूर्वकम् ।। पञ्चामृतस्नानं।
गङ्गादिसरिदानीतैः तोयैर्गन्धादि वासितैः।
अभिषेकं करोमीशौ पापाद्वारयतं च माम् ।। स्नानं, आचमनं।
रमारमेश्वरौ देवौ पीताम्बरयुगं तथा।
कञ्चुकं चोत्तरीयं च परिधत्तं महार्घवत् ।। वस्त्रं।
उपवीतानि कार्पासनिर्मितानीह भक्तितः।
मयानीतानि गृह्णीतं मम पापनिवृत्तये ।। उपवीतं।
हारकङ्कणकेयूरनूपुरैः कुण्डलैस्तथा।
ताटङ्कनासाभरणैः भूषयामि सुरेश्वरौ ।। आभरणानि।
चन्दनागरु कर्पूर रोचना मृगनाभिजम्।
गन्धं गृह्णीतमाद्यौ वां मत्पङ्कस्य विशुद्धये ।। गन्धं।
मल्लिकामालतीजातीनागकेसरचम्पकैः।
भक्त्या समर्पितां मालां प्रतिमुञ्चतमादरात् ।। पुष्पाणि।

अङ्गपूजा - ओं - नमः - पूजयामि।

रमारमेश्वराभ्यां - पादान्। सिन्धुजातत्पतिभ्यां - गुल्फान्। श्रीविष्णुभ्यां - जङ्घाः। लक्ष्मीनारायणाभ्यां - जानूनि। इन्दिरातत्पतिभ्यां - ऊरून्। माता पितृभ्यां - गुह्ये। सुकटिभ्यां - कटी। श्री दामोदराभ्यां - उदरे। श्री श्रीनिवासाभ्यां - वक्षसी। कंबुकण्ठाभ्यां - कण्ठौ। कोमलदीर्घबाहुभ्यां - बाहून्। सौम्यमुखाभ्यां - मुखे। शुभनासाभ्यां - नासे। दिक्श्रोत्राभ्यां - श्रोत्राणि। कर्णान्तनेत्राभ्यां - नेत्राणि। तिलक शोभिताभ्यां - फाले। कमलातत्पतिभ्यां - शिरसी। रमारमेशाभ्यां - सर्वाङ्गं पूजयामि।

दशाङ्गं गुग्गुलुं धूपं सुगन्धञ्च मनोहरम्।
आघ्रेयं सर्वभूतानां गृह्णीतं अब्धिवासिनौ ।। धूपं।
त्रिवर्ति घृत संयुक्तं वह्निना योजितं मया।
गृह्णीतं मङ्गलं दीपं त्रैलोक्यतिमिरापहम् ।। दीपं।

अन्नं चतुर्विधोपेतं नानाव्यञ्जन संयुतम्।
भक्ष्यैः फलैश्च विविधैः गृह्णीतं श्रीरमेश्वरौ ॥ नैवेद्यं, आचमनं, तांबूलम्।
नीराजनं सुमाङ्गल्यं कर्पूरेण प्रकल्पितम्।
भक्त्या प्रदर्शितं नित्यौ भवतं मङ्गलप्रदौ ॥ नीराजनं - प्रदक्षिणनमस्कारान्।
रमारमेशौ जगतामधीशौ प्राच्यां मयूरेशपुरस्य विष्ठितौ।
तदाज्ञया भक्तजनानुकम्पिनौ देवार्चने धत्तमनुग्रहाज्ञाम्। (प्रार्थना)
अनया पूजया रमारमेशौ प्रीयेताम्।

(ततः गुणेशाख्यमयूरेश्वरपूजां विदध्यात्। उपोष्य रात्रौ कथाश्रवण नाम सङ्कीर्तन नृत्तगीतादिभिः जागरणां कृत्वा द्वितीयायां तिथौ प्रातः स्नात्वा कृतनित्यक्रियः, दक्षिणद्वारपूजां कुर्यात्। आश्रया नाम द्वाराध्यक्षा। उमामहेश्वरौ अङ्गदेवते।)

द्वितीयायां दक्षिण द्वाराध्यक्षपूजा।

सङ्कल्पः - परमेश्वर प्रीत्यर्थं मयूरेश्वरपुरदक्षिण द्वाराध्यक्षदेवतायाः आश्रयायाः पूजां करिष्ये। कलशपूजा।
आश्रयां भावये देवीं मयूरेश्वरकिङ्करीम्।
दक्षिणाद्वार संस्थानां देवभक्तिप्रदां शिवाम् ॥ ध्यायामि।
आवाहयामि देवि त्वां अभीष्टवर दायिनीम्।
मयूरेशार्चने मेऽस्तु योग्यता घृणया तव। आवाहयामि।
आसनं कल्पितं रम्यं स्वर्णरत्नविनिर्मितम्।
प्रीत्या गृहाण वरदे मत्पापशमनं कुरु ॥ आसनं।
कुशाक्षतादिसंमिश्रं दिव्यतोयमिदं शुभम्।
पादावनेजनार्थाय दत्तं देवि गृहाण भोः ॥ पाद्यं।
अर्घ्यमष्टाङ्गसंयुक्तं हेमपात्रस्थमादरात्।
गृहीत्वाऽभ्युक्ष्य मां पापाद् विशुद्धं कुरु सर्वदा ॥ अर्घ्यं।

आचम्यतां लोकवन्द्ये सर्वाधारस्वरूपिणि।
शुद्धतोयमिदं क्लृप्तं गृहीत्वा परया मुदा ॥ आचमनं।

मधुपर्कं मया दत्तं दधिमध्वाज्यमिश्रितम्।
गृहाण सर्ववरदे कीर्तिं देहि परां मयि ॥ मधुपर्कं।

रंभाफल सिता क्षौद्र घृतक्षीर विमिश्रितम्।
स्नानं पञ्चामृतेनाद्य कुरुष्वाश्रय देवते ॥ पञ्चामृतस्नानं।

गोदावर्याः समानीतं शुद्धतोयमिदं शुभम्।
स्नानं कुर्वाश्रये देवि मम पापं व्यपोहय ॥ स्नानं आचमनं।

दुकूलयुगलं देवि देहालङ्करणाय ते।
ददामि प्रतिगृह्णीष्व शुभं कुरु सदा मम ॥ वस्त्रं।

हारकङ्कण केयूरनूपुरादि प्रकल्पितम्।
ददाम्याभरणं तुभ्यं स्वीकुरुष्व दयानिधे ॥ आभरणम्।

चन्दनागरु कर्पूर कुंकुमादिविमिश्रितम्।
विलेपनमिदं रम्यं स्वीकुरुष्व दयानिधे ॥ गन्धं।

अक्षतान् धवलान् देवि शालिजानक्षतान् शुभान्।
गन्धोपरि ददाम्यद्य अक्षतं कुरु मां सदा ॥ अक्षतान्।

पुष्पाणि च सुगन्धीनि मालतीमल्लिकानि च।
मालिकानां विशिष्टानि गृहाणाश्रयदेवते ॥ पुष्पाणि।

अङ्गपूजा - ओं ... नमः... पूजयामि।

आश्रयायै - पादौ। सर्वाधारायै गुल्फौ। भक्ताश्रयायै - जङ्घे। सुखाश्रयायै - जानुनी। दक्षद्वाराश्रयायै - ऊरू। आज्ञाश्रयायै - गुह्यं। रूपाश्रयायै कटिं। नामाश्रयायै - नाभिं। भूताश्रयायै - उदरम्। रत्नाश्रयायै - उरः। गीताश्रयायै कण्ठं। धनाश्रयायै - हस्तौ। पद्माश्रयायै - मुखं। विद्याश्रयायै - जिह्वां। प्राणाश्रयायै - नासिकां। शब्दाश्रयायै - श्रोत्रे। वह्न्याश्रयायै - नेत्रे। प्रज्ञाश्रयायै - फालं। योगाश्रयायै - शिरः। सर्वाश्रयायै - सर्वाङ्गं।

वनस्पतिरसामिश्र दशाङ्ग परिवर्धितम्।
दिव्यं धूपं ददाम्यद्य गृह्यतां आश्रयाभिधे ॥ धूपं।
साज्यं ज्वालासमायुक्तं वर्तित्रयसमन्वितम्।
दीपं गृहाण देवेशि दक्षद्वाराधिदेवते ॥ दीपं।
नैवेद्यं पायसापूपभक्ष्यलेह्याद्दिकल्पितम्।
मृद्वीकादि फलैर्युक्तं सुस्वादु प्रतिगृह्यताम् ॥ नैवेद्यं तांबूलं।
नीराजनं सुमाङ्गल्यं कर्पूरपरिकल्पितम्।
गृह्यतां सुभगे रम्ये ममागः क्षम्यतां शिवे। नीराजनं - प्रदक्षिण नम .स्कारान्।
सर्वाश्रये देवि निराश्रयं मां मयूरनाथस्य पदाब्जसंश्रयम्।
विधेहि तस्यार्चनबद्धचित्तं इन्द्रादिदेवैरपि संस्तुतस्य ॥

उमामहेश्वर पूजा

सङ्कल्पः - मयूरेश्वर दक्षिणाङ्गदेवताभूतोमामहेश्वर पूजां करिष्ये।

उमामहेश्वरौ ध्याये निर्मलस्फटिकाकृती।
मयूरेश्वर दक्षाङ्गनायकौ वृषभध्वजौ ॥ ध्यायामि।
सर्वानन्दमयौ पूर्णौ सर्वविद्येश्वरौ शिवौ।
आवाहयामि दक्षाङ्गसंस्थितौ सर्वसिद्धिदौ ॥ आवाहयामि।
आसनं रत्नखचितं रम्यं सिंहावृतं शुभम्।
पूजार्थं वां प्रयच्छामि सुखेनास्तं चिरन्तनौ ॥ आसनं।
ाद्यमाद्यन्तशून्याभ्यां शिवाभ्यां सरिदाहृतम्।
हिरण्य कलशास्थं तद्गृह्णीतं मम दैवते ॥ पाद्यं।
अर्घ्यमष्टाङ्गसंयुक्तं गन्धपुष्पादिमिश्रितम्।
मत्पापपरिहारार्थं गृह्णीतं परमेश्वरौ ॥ अर्घ्यं।
आचम्येतां जगद्वन्द्यौ एलागन्धादिवासितम्।
परभक्त्या समानीतं सलिलं वरदंपती ॥ आचमनीयं ॥

दधिमध्वाज्यसंयुक्तं कांस्यपात्रे प्रतिष्ठितम्।
मधुपर्कमिदं पूज्यौ गृह्णीतं कृपया मयि ॥ मधुपर्कं ॥

रंभाज्य शर्कराद्राक्षाफलैः पञ्चामृतं शुभम्।
स्नानार्थं वां प्रयच्छामि कुरुतं प्रतिपूर्वकम् ॥ पञ्चामृतस्नानं ॥

मन्दाकिन्याः समानीतं सुगन्धिजलमुत्तमम्।
ज्ञानसंशुद्ध देहौ वां स्नातं मम विशुद्धये ॥ स्नानं आचमनं ॥

अग्निशौचानि वासांसि देहालङ्करणाय तु।
ददामि परिधत्तं वां मल्लज्जारक्षणाय वै ॥ वस्त्रं ॥

उपवीतमिदं शुद्धं हेमसूत्रविनिर्मितम्।
देवौ धारयतं नित्यं मम पापविशुद्धये ॥ उपवीतं ॥

हारनूपुर केयूरताटङ्क वलयोर्मिभिः।
अलंकुरुतमाद्यौ वां हेमाकार वपुर्धरौ ॥ आभरणानि ॥

मृगनाभ्यादिसंघृष्टं रक्तचन्दनमुत्तमम्।
विलिम्पतं सुरश्रेष्ठौ पङ्कं मा लिम्पतं मयि ॥ गन्धान् ॥

बिल्वैर्मन्दार कुसुमैः मल्लिका चन्दनादिभिः।
भक्त्या संग्रथितां मालां प्रतिमुञ्चतमादरात् ॥ पुष्पाणि ॥

अङ्ग पूजा - ओं ... नमः ... पूजयामि।

पद्मपादाभ्यां - पादान्। गूढ गुल्फाभ्यां - गुल्फान्। वृत्तजंघाभ्यां - जंघाः। सुजानुभ्यां - जानूनि। रंभोरुभ्यां - ऊरून्। जगज्जनकाभ्यां - गुह्ये। आवर्तनाभिभ्यां - नाभी। मुक्तादिशोभिभ्यां - वक्षसी। जगज्जीवनाभ्यां - कुचान्। कंबुकण्ठाभ्यां - कण्ठौ। मृदुहस्ताभ्यां - हस्तान्। सौम्यवदनाभ्यां - मुखे। सुनासाभ्यां - नासे। मृगाक्षिभ्यां - अक्षीणि। दिक्श्रोत्राभ्यां - श्रोत्राणि। विरूपाक्षाभ्यां - फाले। दिव्यमूर्धभ्यां - शिरसी। सर्वेश्वराभ्यां - सर्वाङ्गं ॥

वनस्पतिरसोद्भूत गुल्गुल्वगरुमिश्रितैः ।
दशाङ्गैर्धूपमेतत्तु गृह्णीतमपराजितौ ॥ धूपं ॥

साज्यं त्रिवर्तिसंयुक्तं वह्निना योजितं मया ।
गृह्णीतं आनन्दमयदीपं लोकप्रका शकम् ॥ दीपं ॥

चित्रान्नै र्लड्डुकापूपैः वटकैर्धृतपायसैः ।
निवेदयामि वां देवौ भुञ्जतं परमादरात् ॥ नैवेद्यं तांबूलं ॥

नीराजनं नीरजाक्षौ ज्वलितैर्लक्षवर्तिभिः ।
प्रददामि परेशानौ क्षमेथां मम मन्तुकान् ॥ नीराजनं प्रदक्षिणनमस्कारान् ।

मयूरेश्वराज्ञाविधाने सुदक्षौ भवानीशिवौ दक्षिणद्वारसंस्थौ ।
गुणेशार्चनायामनुज्ञां विधत्तं सदानन्दरूपे मनो मेऽस्तु नित्यम् ॥ (प्रार्थना)

अनया पूजया उमा महेश्वरौ प्रीयेताम् ।

इति समाप्य मयूरेश्वरं अभ्यर्च्य उपवसेत् । रात्रौ जागरणादिः । तृतीयायां प्रातः स्नात्वा पश्चिमद्वाराध्यक्ष देवतां भोगदां रतिकन्दर्पौ च पूजयेत् ॥

तृतीयायां द्वाराध्यक्षपूजा

सङ्कल्पः । तृतीयायां पश्चिमद्वाराध्यक्षदेवतापूजां करिष्ये । कलशपूजा ।

भोगदां चिन्तयामीह सर्वाभरण भूषिताम् ।
मयूरेशाज्ञया प्रत्यग्द्वारनिष्ठां परावराम् ॥ भोगदां ध्यायामि ॥

आवाहयामि देवि त्वां अभीष्टार्थविधायिनीम् ।
परया कृपया मत्तः पूजां स्वीकुरु भोगदे ॥ आवाहयामि ॥

रत्नसिंहासनं देवि मनसा चारु कल्पितम् ।
अत्रासीना मदीयार्चां गृहाणाद्य शुचिस्मिते ॥ आसनं ॥

उत्तमं पाद्यमानीतं सर्वभोगप्रदायिनि ।
गङ्गादिभ्यः शुचि जलं गृहाण भुवनाधिपे ॥ पाद्यं ॥

अर्घ्यं गन्धाक्षतसुमैः शुद्धं यच्छामि सादरम् ।
अनर्घभोगदात्री त्वं गृहाण वरदायिनि ॥ अर्घ्यं ॥

उशीरादिसुगन्धाढ्यं गाङ्गतोयमनुत्तमम्।
कुरुष्वाचमनं भद्रे सर्वभोगान्प्रयच्छ मे ॥ आचमनं ॥

मधुपर्कमिदं देवि दधिमध्वाज्यमिश्रितम्।
मत्पापशमनार्थाय ददाम्याशु गृहाण भो ॥ मधुपर्कं ॥

स्नानं पञ्चामृतं देवि क्षीराज्यमधुशर्करैः।
दत्तं ते प्रतिगृह्णीष्व पावितं कुरु मां सदा ॥ पञ्चामृतस्नानं ॥

शुद्धतोयमिदं देवि सुगन्धोशीरवासितम्।
स्नाहि गङ्गातुङ्गभद्रासरिद्भ्यः सम्यगाहृतम् ॥ स्नानं आचमनं ॥

दुकूलद्वयमेतत्त्वं वसान परि भोगदे।
मनः संकल्पितान् भोगान् प्रयच्छ समलङ्कृता ॥ वस्त्रं ॥

मुक्तामण्यञ्चितं चारु हारं वलयमङ्गदम्।
सौवर्णरत्नखचितं ददामि प्रतिगृह्यताम् ॥ आभरणानि ॥

गन्धं गृहाण सुरभिं घनमुस्तादिमर्दितम्।
विलिम्पानेन सर्वाङ्गं मम पङ्कं व्यपोहय ॥ गन्धं ॥

शोभनग्रथितां मालां कुन्दमन्दारकादिभिः।
कन्धरे प्रतिमुच्याशु मद्भक्तिं प्रकटी कुरु ॥ पुष्पाणि ॥

अङ्ग पूजा - ओं - नमः ... पूजयामि।
भोगदायै - पादौ। धनदायै - गुल्फौ। यशोदायै - जंघे। शुभदायै - जानुनी।
बलदायै - ऊरू। पुत्रदायै - गुह्यं। अन्नदायै - जठरं। भाग्यदायै - उरः।
स्वरदायै - कण्ठं। ज्ञानदायै मुखं। रूपदायै चक्षुः। प्राणदायै - नासिके।
कीर्तिदायै - श्रोत्रे। शर्मदायै - शिरः। भक्तिदायै - सर्वाङ्गं।

दशाङ्गधूपितं धूपं मृगशाबाक्षि गृह्यताम्।
आघ्रेयः सर्वदेवानां जिघ्र सर्वाङ्गशोभने ॥ धूपं ॥

दीपं वर्तित्रयोपेतं ज्वलितं वह्नितेजसा।
दर्शयामि मयूरेशप्रत्यग्द्वाराश्रये शुभे ॥ दीपं ॥

पायसं पिष्टकृसर चित्रान्नापूपशष्कुलीः ।
निवेदयाम्यहं देवि गृहाण परया मुदा ।। नैवेद्यं ताम्बूलं ।।

नीराजनं सुमाङ्गल्यं कर्पूरेण विनिर्मितम् ।
सर्वमङ्गललाभाय सङ्कष्टविनिवृत्तये ।। नीराजनं ।।

प्रदक्षिणनमस्कारान् ।

श्री भोगदे देवि गुणेशपाद पद्मद्वयासक्तमना भवेयम् ।
तथा त्वमेवाशु विधाय तस्य पूजाविधौ देहि परामनुज्ञाम् ।। (प्रार्थना)

अनया पूजया भोगदा प्रीयताम् ।

रतिकन्दर्प पूजा -

ध्यायामि रतिकन्दर्पौ गुणेशाज्ञाविधायिनौ ।
प्रत्यग्द्वाराङ्गसंस्थानौ रूपयौवनशालिनौ ।। ध्यायामि ।।

आवाहयामि देवेशौ सर्वसुन्दरगात्रिणौ ।
गुणेशपूजा संपूर्णफलावाप्तेरभीप्सया ।। आवाहयामि ।।

आसनं रत्नखचितं आदिदेवौ सुकल्पितम् ।
अत्र स्तं मम पूजार्थं मनोऽभीष्टं प्रयच्छतम् ।। आसनं ।।

अनाद्यन्तौ कामदेवौ यवदूर्वादिसंयुतम् ।
पाद्यं ददामि गृह्णीतं मनोनैर्मल्यमस्तु मे ।। पाद्यं ।।

अर्घ्यं सुवर्णकरके समानीतं हि सुन्दरौ ।
मम तेजोऽभि वृद्ध्यर्थं गृह्णीतं तोयमुत्तमम् ।। अर्घ्यं ।।

सङ्कल्पजौ तोयमिदं दत्तमाचमनाय वाम् ।
उशीरैलालवङ्गादि वासितं स्वादु शीतलम् ।। आचमनम् ।।

मधुपर्कं ददाम्यादौ दंपती साधु कल्पितम् ।
दधिमध्वाज्य संयुक्तं गृह्णीतं परमादरात् ।। मधुपर्कं ।।

सिद्धं पञ्चामृतमिदं स्नानाय फलसंस्कृतम् ।
गृह्णीतं रतिकन्दर्पौ मम सर्वार्थसिद्धये ॥ पञ्चामृतस्नानं ॥

कृष्णागोदावरीरेवासरिद्भ्यः परिपूरितम् ।
आनीतं कलशं सम्यक् स्नातं रतिमनोभवौ ॥ स्नानं, आचमनं ॥

मनोज्ञानीह वस्त्राणि परिधत्तं ददाम्यहम् ।
लज्जासंरक्षणार्थाय महार्घाणि वराणि च ॥ वस्त्राणि ॥

हेमतन्तु प्रक्लृप्तानि हृद्यानि परिशुद्धये ।
दत्तानि परया भक्त्या पूतं मां कुरुतं सदा ॥ उपवीतं ॥

हारकङ्कण केयूरमेखलानूपुरादिभिः ।
भक्त्या समर्पितैर्नित्यं अलङ्कुरुतमादरात् ॥ आभरणम् ॥

गन्धं कलयतं फालयुगले मृगनाभिजम् ।
शोभनाय प्रयच्छामि कुरुतं मां सुगन्धिनम् ॥ गन्धं ॥

पुष्पाणि सुरभीण्यद्य मल्लिकावकुलानि च ।
समर्पयामि गृह्णीतं पश्चिमद्वार वासिनौ ॥ पुष्पाणि ॥

अङ्गपूजा - ओं... नमः... पूजयामि ।

मनोजाभ्यां - पादान् । मङ्गलमूर्तिभ्यां - गुल्फान् । नित्ययुवभ्यां - जङ्घाः । आह्लाद कारिभ्यां - जानूनि । अतिसुन्दराभ्यां - ऊरून् । चक्षुरगोचराभ्यां - गुह्ये । अव्यक्तमूर्तिभ्यां - करौ । आनन्दरूपाभ्यां - जठरे । निम्ननाभिभ्यां - नाभी । हारशोभिभ्यां - वक्षसी । गानरसिकाभ्यां - कण्ठौ । आजानुबाहुभ्यां - बाहून् । शुचिस्मिताभ्यां - मुखे । चम्पकनासाभ्यां - नासिके । कुण्डला लङ्कृताभ्यां - कर्णान् । इन्दीवराक्षिभ्यां - अक्षीणि । तिलकित फालाभ्यां-। फाले । रतिमन्मथाभ्यां - शिरसि । चित्तजन्मभ्यां - सर्वाङ्गं ॥

दशाङ्ग चूर्णसंमिश्रं वरधूपमिदं शुभम् ।
आघ्रापयामि देवेशौ गृह्णीतं करुणाकरौ ॥ धूपं ॥

दीपं ददामि सुभगौ गुणेशपुरपश्चिमे।
मुख्याङ्गत्वेन निर्दिष्टौ दिशतं भाग्यमुत्तमम्॥ दीपं॥

मोदकैर्लड्डुकैः पूपैर्वटकैः पूरिकादिभिः।
नैवेद्यं कारयामीशौ भुञ्जीथां रतिमन्मथौ॥ नैवेद्यं, आचमनं, ताम्बूलम्॥

नीराजनं ददाम्याद्यौ सर्वसंपत्प्रपूरकौ।
अपराधक्षमायाथ सर्वमङ्गलमस्तु मे॥ नीराजनम्। प्रदक्षिणनमस्कारान्।

गुणेशार्चनायां त्वदीयामनुज्ञां
प्रयाचेऽद्य भक्तेर्विवृद्धिं रतीशौ।
मयूरेशपुर्याः प्रवेशे च योग्यं
विधातुश्च मोद प्रमोदौ यतेथाम्॥ प्रार्थना॥

अनया पूजया रति कन्दर्पौ प्रीयेताम्॥

(स्नात्वा मयूरेशं संपूज्य उपवसेद्रात्रौ जागरणादिभिः।
इति तृतीयातिथिपूजां समापयेत्।)

चतुर्थ्यां प्रातः स्नात्वा कृतनित्यक्रियः उत्तरद्वाराध्यक्षां कामदां अङ्गदेवौ महीवराहौ च पूजयेत्।

चतुर्थ्यां द्वाराध्यक्षदेवता पूजा

ध्यायामि कामदां देवीं भक्तकामप्रदायिनीम्।
गुणेशपत्तनोदीच्यद्वारसंस्थानदेवताम्॥ कामदां ध्यायामि॥

आवाहयामि देवि त्वां अभीष्टवरदा भव।
गुणेशार्चाफलावाप्तिकामोऽहं कामदेवते॥ आवाहयामि॥

आसनं कल्पितं रम्यं हेमरत्नविचित्रितम्।
ददाम्यास्व महादेवि प्रसादं कुरु सर्वदा॥ आसनं॥

हेमकुंभसमानीतं पादप्रक्षालनाय ते।
कुशाक्षतादिसंमिश्रं सलिलं प्रतिगृह्यताम्॥ पाद्यं॥

अर्घ्यमष्टाङ्गसंयुक्तं यवदूर्वादि संयुतम्।
कामदे देवि गृह्णीष्व हस्ताभ्यां परमादरात्॥ अर्घ्यं॥

आचम्यतां जगद्वन्द्ये शुद्धतोयं मया हृतम्।
अन्तः करण शुद्ध्यर्थं विधेहि करुणां मयि॥ आचमनं॥

मधुपर्कमिदं देवि दधिमध्वाज्यमिश्रितम्।
गृहाण सर्ववरदे ममारातीन्नुदेश्वरि॥ मधुपर्कं॥

स्नानं पञ्चामृतेनैव क्षीरमध्वाज्यशर्करैः।
संपादितेन कामेशि कुरुष्व परया मुदा॥ पञ्चामृतस्नानं॥

गङ्गामरुद्वृधादिभ्यः तोयं हेमघटाहृतम्।
स्नाहि कल्याणि वरदे मम पापं विशोधय॥ स्नानं - आचमनं॥

वसनं कामदे पीतं सुसूक्ष्मं देवनिर्मितम्।
परिधत्स्व परेशानि कुरु मां हृष्टमानसम्॥ वस्त्रं।

हारताटङ्ककेयूरनासिकाभरणादिभिः।
संक्लृप्तैश्च मया रम्यैः कुरु देहमलङ्कृतम्॥ आभरणानि।

श्रीखण्डघनसारादि विमिश्रं गन्धमुत्तमम्।
गृहाण सर्वसुरभिं मम पङ्कं विनाशय॥ गन्धं।

पुष्पमालां विचित्रां च चम्पकाशोकनिर्मिताम्।
ददामि भूषणार्थाय प्रतिमुञ्च परावरे॥ पुष्पाणि।

अङ्ग पूजा - ओं ... नमः ... पूजयामि।

कामदायै - पादौ। शर्मदायै .... गुल्फौ। तूणजंघायै - जंघे,
मुकुटजानवे - जानू। करभोरवे - ऊरू। शुभकट्यै - कटिं।
गंभीरनाभये - नाभिं। कुशोदर्यै - उदरं। विशुद्धायै - हृदयं।
महोरस्कायै - उरः। शुभकण्ठायै - कण्ठं। वल्लीभुजायै - बाहू।
सुमुखायै - मुखं। सुनसे - नासिकां। सुकर्णायै - कर्णौ।
पद्मनेत्रायै - नेत्रे। फलकफालायै - फालं। सर्वेश्वर्यै - शिरः।

कामदायै - सर्वाङ्गं।

दशाङ्गं गुग्गुलूपेतं सुगन्धि सुमनः प्रियम्।
आघ्रापयामि ते धूपं गृह्यतां कामदायिनि ॥ धूपं।
साज्यं त्रिवर्तिसहितं वह्निना योजितं मया।
गृहाण मङ्गलं दीपं त्रैलोक्यतिमिरापहम् ॥ दीपं।
नैवेद्यं षड्रसोपेतं नानाभक्ष्यप्रपूरितम्।
ददामि कामदे देवि प्रीत्या भुंक्ष्व यथा सुखम् ॥ नैवेद्यं, आचमनं, ताम्बूलं।
नीराजनं नीरजाक्षि घृताक्तैः पञ्चवर्तिभिः।
वह्निना योजितैरेतत् गृहीत्वा कुरु मे शिवम् ॥ नीराजनं, प्रदक्षिण नमस्कारः।
कामार्थदे कामिनि भक्तकाम -
प्रपूरणि त्वं मम देहि कामान्।
मयूरनाथार्चन भाग्यकामं
प्रपन्नमेनं भवती प्रशाधि (क्षमस्व)। प्रार्थना।
अनया पूजया कामदा प्रीयताम्।

महीवराहपूजा।

ध्यायामि भूवराहौ वां गुणेशाज्ञानुकारिणौ।
तद्वामाङ्कतयोदीच्यां स्थितौ लोकस्य रक्षकौ ॥ ध्यायामि।
आवाहयामि भूकोलौ जगदुद्धारकौ मुदा।
मत्पूजां प्रतिगृह्णीतं गुणेशानु ग्रहेच्छया ॥ आवाहयामि।
आसनं रत्न सौवर्ण खचितं लक्षणान्वितम्।
आस्तं पूजाविधानाय परया घृणया मयि ॥ आसनं।
पाद्यमाद्यन्तरहितौ मम पापविशुद्धये।
ददामि कुरुतं प्रीत्या शुद्धतोयमिदं शुभम् ॥ पाद्यं।
अर्घ्यं गन्धकुशाग्रैश्च मिश्रितं परिकल्पितम्।
प्रजापश्वादि वृद्ध्यर्थं गृह्णीतं जलमुत्तमम् ॥ अर्घ्यं।

आचम्येतां जगत्पूज्यौ उशीरैलादि वासितम्।
अंभः पूतं ददामीशौ नीरोगं कुरुतं च माम्॥ आचमनं।
दधिमध्वाज्यसंमिश्रं मधुपर्कं मयाऽऽदरात्।
कल्पितं भूवराहौ वां गृह्णीतममरार्चितौ॥ मधुपर्कं।
क्षीराज्य मधुरंभादि फलैः पञ्चामृतं कृतम्।
स्नातं महीकिटी मह्यं भक्तिं दत्तं पदांबुजे॥ पञ्चामृतस्नानं॥
हेमकुंभसमानीतशुद्धतोयेन वां सदा।
अभिषिञ्चामि कृपया समालोकयतं च माम्॥ स्नानमाचमनं च।
अब्धिरूपाणि वस्त्राणि नीलपीतादिकान्यपि।
महार्घ्याणि प्रक्लृप्तानि समाच्छादयतं रसात्॥ वस्त्रं।
हेमसूत्राणि निर्माय प्रदत्तानि वराणि च।
उपवीतानि गृह्णीतं महीकोलौ परात्परौ॥ उपवीतं॥
सुगन्धं गुणभूतं वां मुस्ताघनरसादिभिः।
घृष्ट्वा दत्तं प्रगृह्याशु वरदौ भवतं सदा॥ गन्धान्।
जातीचंपकपुन्नाग केतकीवकुलादिभिः।
ग्रा॰.तां मालिकां चित्रां गृह्णीतं परमादरात्॥ पुष्पाणि।
अंगपूजा। ओं ... नमः ... पूजयामि।

पातालपादाभ्यां पादान्...। महातलगुल्फाभ्यां .... गुल्फान्...। तलातलजंघाभ्यां ... जंघाः...। रसातल जानुभ्यां..... जानूनि .....। सुतलोरुभ्यां..... ऊरू.....। वितलगुह्याभ्यां... गुह्ये...। अतल-कटिभ्यां... कटी....। भूनाभिभ्यां...। नाभी...। भुवर्जठराभ्यां.... जठरे...। स्वर्हृदयाभ्यां.... हृदये...। महर्वक्षोभ्यां... वक्षसी...। जनोबाहुभ्यां.... बाहून्...। तपःकण्ठाभ्यां कण्ठौ...। सत्यमुखाभ्यां.... मुखे ...। प्राणादिरूपाभ्यां... नासिके...। इनेन्दुनेत्राभ्यां... नेत्राणि...। शब्दरूपाभ्यां... श्रोत्राणि...। तिलकितफालाभ्यां... फाले...। अग्नि मूर्धभ्यां... शिरसी...। महीवराहाभ्यां.... सर्वाण्यंगानि....।

गुग्गुल्वगरु संमिश्रं धूपंदत्तमिदं प्रभू।
आघ्रापयामि भूकोलौ सुरभि घ्राणमुत्तमम्॥ धूपं॥
दीपं ददामि वां दिव्यं पञ्चवर्त्यग्नियोजितम्।
दर्शयामि सुरश्रेष्ठौ मां कटाक्षेण पश्यतम्॥ दीपं॥
अन्नं चतुर्विधोपेतं भुञ्जाथां आदिभूकिटी।
नानाभक्ष्य फलोपेतं नैवेद्यं कल्पितं मया॥ नैवेद्यतांबूले।
नीराजनं महीकोलौ कर्पूरेण कृतं मया।
सर्वमङ्गललाभायाप्यपराधक्षमा य च॥ नीराजनं प्रदक्षिणनमस्कारौ।
नित्यौ विशुद्धौ महीकोलरूपौ गुणेशार्चनायामनुज्ञां विधत्तम्।
त्रिमूर्तिस्वरूपे मयूरेश्वरे मां पदांभोजभक्तं नतं ब्रूतमारात्॥
अनया पूजया महीवराहौ प्रीयेताम्॥

## गुणेशपूजाक्रमः।

प्रातः स्नात्वा, माध्याह्निकक्रियां समाप्य श्लक्ष्णां शुद्धां पाषाणशर्करादिवर्जितां मृदमानीय ब्रह्मविष्णुरुद्रात्मकत्वेन त्रिमुखं शुण्डाविराजितं शूर्पकर्णादिलक्षणयुक्तं षड्भुजं पाशाङ्कुश चक्रत्रिशूल-परशु-मोदक स्वदन्तचिह्नितं पार्श्वस्थमयूरसहितं देवं निर्माय, चतुर्द्वारसहितं सोपान त्रयसहितं मण्डपं विरच्य, तत्र देवं प्रतिष्ठाप्य, पूर्वोक्तविधिना द्वारदेवताः अङ्गदेवताश्च संपूज्य, मयूरेश्वर पूजां करिष्ये इति सङ्कल्प्य, भूशुद्धिं, भूतशुद्धिं, मातृकान्यासं, दीपपूजां, घण्टापूजां कलशशंखपूजां आत्मपूजां च कुर्यात्।

हृत्पद्मकर्णिकामध्यात् आगच्छत्वं गणेश्वर।
सिद्ध्या बुद्ध्या च सहितः सगणः सन्निधिं कुरु।

=(इति हृदयपद्मादागतं बिम्बे विभाव्य, यथाशक्ति मूलमन्त्रं जप्त्वा बिम्बे समर्पयेत्।)

= आधारशक्तिकमलासनाय नमः। तीव्रा - ज्वालिनी - नन्दा - भोगदा - कामरूपिणी - उग्रा - तेजोवती - सत्या - विघ्ननाशिन्याख्य पीठशक्तिभ्यो नमः। (प्राणान्प्रतिष्ठाप्य, षोडशभिः उपचारैः उपचर्य, नीराजनानन्तरं एकविंशति दूर्वाः समर्प्य पञ्चावरणदेवतापूजां कुर्यात्। उत्तरांगत्वेन मूलमन्त्रजपं कृत्वा देवहस्ते समर्पयेत्। रात्रौ जागरणं कृत्वा उपोष्य प्रातः स्नात्वा कृतनित्य क्रियः, स्वगृह्योक्तविधिना अग्निं प्रतिष्ठाप्य इक्षु - सक्तु - रंभाफल - पृथुक - तिल - मोदक - नारिकेल - लाजाख्याष्टद्रव्यैः यथाशक्ति जुहुयात्। पारणां समाप्य परेद्युः प्रातः पूजां विधाय बिम्बं शिबिकामारोप्य बालैः दण्डक्रीडा वाद्यघोषपुरः सरं बिम्बं जले विसृजेत्। इति संग्रहः।

## पूजाविधिः

नभस्ये शुक्लपक्षे तु चतुर्थ्यामर्चितो मया।
कृता च विधिवन्मूर्तिः मृण्मयी सौम्यदर्शना॥
गिरिजाऽभीष्ट सिद्ध्यर्थं तस्यामाविरभूः किल।
अनेकाक्षिशिरः पादबाहु कर्णायुधः स्वयम्॥
विश्वरूपस्य भवतो दर्शने गिरिजा भयात्।
तुष्टाव परया भक्त्या तस्यै तुष्टो वरं ह्यदाः॥
बालवत्क्रीडनार्थाय बालरूपोऽभवस्तदा।
पूजार्थं तादृशं रूपं संस्मरामि गजानन॥
ब्रह्मविष्ण्वीशवदनं शुण्डारदनशोभितम्।
कोटिसूर्य प्रतीकाशं चन्द्रकोटिसुशीतलम्॥
पाशाङ्कुशौ चक्रशूलौ पर्शुमोदकदन्तकान्।
बिभ्राणं षड्भुजैः सम्यक् गुणेशाभिधमीश्वरम्॥
वामदक्षिण भागस्थ सिद्धिबुद्धिसमावृतम्।
हारताटङ्क केयूर मुकुटाद्यि विराजितम्॥

पीतांबरधरं फालचन्द्रं भास्वरविग्रहम्।
नागकक्षोदरा बन्धं नागयज्ञोपवीतिनम्॥
सिन्दूरितमहाकुंभं शूर्पकर्णमुपास्महे॥ ध्यानम्।
(प्राण प्रतिष्ठां कृत्वा)

अत्रागच्छ मयूरेश ब्रह्मादिमुनिवन्दित।
आवाहयामि बिम्बेऽस्मिन् मम पूजां गृहाण भो॥

सहस्रशीर्षा + दशाङ्गुलम्। आवाहयामि।

स्वर्णसिंहासनं चारु नवरत्नविचित्रितम्।
सुखेनास्व गुणेशान भक्तिं देहि पदाम्बुजे॥

पुरुष एवे + रोहति। आसनं समर्पयामि।

पादौ प्रक्षालयामीश यवदूर्वाक्षतादिभिः।
पुष्पादिभिश्च संशुद्ध गङ्गादिसलिलैः शुभैः॥

एतावानस्य + दिवि। पाद्यं समर्पयामि।

मयूरेश ददाम्यर्घ्यं कुशपुष्पादिमिश्रितम्।
गृहाण सर्ववरद प्रजासन्ततिरस्तु मे॥

त्रिपादूर्ध्वं + अभि। अर्घ्यं समर्पयामि।

ददाम्याचमनीयं ते मधुपर्कपुरस्तनम्।
उशीरवासितं तोयं गङ्गाया उद्धृतं शुभम्॥

तस्माद्विरा + पुरः। आचमनीयं समर्पयामि।

मधुपर्कमिदं रम्यं दधिमध्वाज्यमिश्रितम्।
गुणेश कांस्यपात्रस्थं अन्नवान्स्यां गृहाण भोः॥

यत्पुरुषेण + हविः। मधुपर्कम्।

सिता - क्षीराज्य - मधुभिः रंभाखर्जूरकादिभिः।
फलैः पञ्चामृतं क्लृप्तं स्नानाय प्रतिगृह्यताम्॥

पञ्चामृतस्नानं समर्पयामि।

गंगागोदावरी कृष्णातुङ्ग भद्रासमाहृतम्।
हेमकुंभैरिदं शुद्धं सुगन्धि स्नाहि निर्मलम्॥

तं य ज्ञं + श्च ये। स्नानं समर्पयामि। आचमनं समर्पयामि।

पीतांबरयुगं सूक्ष्मं रुक्मतन्तु विचित्रितम्।
मयूरेश गृहाण त्वं परिधेहि मुदा मयि॥

तस्माद्यज्ञात् + ये। वस्त्रे समर्पयामि।

उपवीतमिदं शुभ्रं मया भक्त्या प्रकल्पितम्।
सर्वपापविशुद्ध्यर्थं गृहाण परमादरात्॥

तस्माद्यज्ञात् + अजायत। उपवीतं समर्पयामि।

किरीटहारकटक किङ्किणीनूपुरादिभिः।
अलङ्कुरु मयूरेश शोभायै सार्वका लिकम्॥

भूषणानि समर्पयामि।

घनकेसरकस्तूरी रोचना चन्दनादिभिः।
विघृष्टगन्धं सुरभि लेपनार्थं ददामि ते॥

तस्मादश्वा + वयः। गन्धान्धारयामि।

अक्षतांश्च मयूरेश कुंकुमाक्तान् गृहाण भो।
समर्पितान्मया भक्त्या अक्षतं कुरु मां सदा॥

अक्षतान्समर्पयामि।

चम्पकाशोक पुन्नागकेतकीवकुलादिभिः।
नन्दनाहृत पुष्पैश्च अर्पयाम्यद्य मालिकाम्॥

यत्पुरुषं + वुच्येते। पुष्पमालां समर्पयामि।

मल्लिकामालती जातीबिल्वैः मरुवकैः सुमैः।
सौगन्धिकैः शमीपत्रैः दूर्वाभिः पूजयाम्यहम्॥

पुष्पाणि समर्पयामि।

अङ्ग पूजा - ओं... नमः... पूजयामि।

गुणेशाय - पादनखानि - । सत्वाय - पादाङ्गुलीः । रजसे - पादतलं। तमसे - पादौ। पृथिव्यात्मने - गुल्फं। अबात्मने - जंघे। तेजोरूपिणे - जानुनी। वाय्वात्मने - ऊरू। आकाशात्मने - गुह्यं। गन्धात्मने - कटिं। रसात्मने - जठरं। रूपात्मने - नाभिं। स्पर्शात्मने - वक्षः। शब्दात्मने - हृदयं। कम्बुग्रीवाय - कण्ठं। भिन्नदन्ताय - दन्तं। शुण्डामुखाय - नासिकां। वक्रतुण्डाय - मुखं। वाणीजिह्वाय - जिह्वां। शूर्पकर्णाय कर्णौ। विश्वनेत्रे - नेत्रे। फालचन्द्राय - फालं। सोमार्कघण्टाय - मस्तकं। मयूरेशाय - शिरः। गुणेशाय - सर्वाङ्गं॥ (सहस्रनामाद्यैरर्चनं कुर्यात्।)

ददामि धूपं देवेश दशाङ्गेन सुधूपितम्।
मयूरेश गृहाण त्वं मम पापापनुत्तये॥

ब्राह्मणोऽस्य + अजायत। धूपमाघ्रापयामि।

साज्यं त्रिवर्ति संयुक्तं वह्निना ज्वालितं मया।
मयूरेश गृहाणेमं मदान्ध्यं विनिवारय॥

चन्द्रमा + अजायत। दीपं समर्पयामि॥

मोदकान् लड्डुकान् पूपान् वटकान् पर्पटान् कृतान्।
शष्कुलीः पूरिकाश्चैव कृसराणि घृताचितान्।
अन्नानि च विचित्राणि स्वादूनि सुरभीणि च।
शर्करामुद्गहारिद्र मिश्रितान्नानि भूरिशः।
कल्पितानि मयूरेश नैवेद्यं भुंक्ष्व सादरम्।
बह्वन्नं कुरु मां देव त्वत्कटाक्षावलोकनात्॥

नाभ्या + अकल्पयन्। महानैवेद्यं निवेदयामि।

आचमनं समर्पयामि।

पूगैलारेणुकाभृङ्ग कर्पूरादिसुवासितैः।
नागवल्ली दलैश्चर्णैः ताम्बूलं संगृहाण भोः॥

ताम्बूलं समर्पयामि।

लक्षवर्ति ज्वालितेन दीपेन परिकल्पितम्।
आरार्तिकमिदं देव मङ्गलार्थं ददामि ते॥

सप्तास्यासन् + पशुम्। नीराजनं दर्शयामि।

वैदिकैर्लौकिकैर्मन्त्रैः मन्त्रितानि सुमानि च।
अपराधक्षमार्थाय चार्पयामि पदाम्बुजे॥

मन्त्रपुष्पं समर्पयामि।

सौवर्णीं दक्षिणां सिद्धिबुद्धिद्वयविशेषित।
अर्पयामि पदांभोजे कटाक्षेणाव मां सदा॥

स्वर्णपुष्पं समर्पयामि।

प्रदक्षिणत्रयं कुर्यां सर्वपापप्रणाशनम्।
त्वत्प्रसादात् वाजिमेधफलं प्राप्नोमि नित्यशः॥

प्रदक्षिणं समर्पयामि।

सहस्रशो नमामीशमपराधान् क्षमापये।
वैदिकैर्लौ किकैः स्तोत्रैः स्तुवे सर्वार्थसिद्धये॥

नमस्करोमि।

यज्ञेन यज्ञं + देवाः। प्रार्थये।

जगद्बीजमेकं चिदानन्दरूपं शिवाद्यैरचिन्त्यं महायोगिवन्द्यम्।
त्रिमूर्तिस्वरूपं मयूराभिधानं परेशं गुणेशं पराशक्तिसूनुम्।
कृपातो भवानीमनोऽभीष्टसिद्ध्यै महीमूर्तितो यः समाविर्बभौ हि।
तमीशं गुणेशं कृपादृष्टिलेशप्रसादार्थं आनन्दपूर्णं भजेऽहम्।
दूर्वायुग्मार्पणम् - ओं नमः। दूर्वायुग्मं समर्पयामि।

गणञ्जयाय। गणपतये। हेरम्बाय। धरणीधराय। महागणपतये। लक्षप्रदाय (यक्षेश्वराय।) क्षिप्रप्रसादनाय। अमोघसिद्धये। अमिताय (अमृताय) मन्त्राय। चिन्तामणये। निधये। सुमङ्गलाय। बीजाय। आशापूरकाय। वरदाय। शिवाय। काश्यपाय। नन्दनाय। वाञ्छासिद्धाय (वाचां सिद्धये) ढुण्ढिविनायकाय।

आवरणपूजा। .... पूजयामि नमः।

प्रथमावरणे - हृदयदेवतां। शिरोदेवतां। शिखादेवतां। कवचदेवतां। नेत्रदेवतां। अस्त्रदेवतां।

द्वितीयावरणे - विद्यां। विधात्रीं। भोगदां। विघ्नघातिनीं। निधिप्रियां। पापघ्नीं। पुण्यां। शशिप्रभां।

तृतीयावरणे - वक्रतुण्डं। एकदंष्ट्रं। महोदरं। गजास्यं। लंबोदरं। विकटं। विघ्नराजं। धूम्रवर्णं।

चतुर्थावरणे - इन्द्रं। अग्निं। यमं। निरृतिं। वरुणं। वायुं। कुबेरं (सोमं)। ईशानं।

पञ्चमावरणे - वजायुधदेवतां। शक्त्या युध देवतां। दण्डायुध देवतां। खड्गायुधदेवतां। पाशायुध देवतां। अङ्कुशायुधदेवतां। गदायुधदेवतां। शूलायुधदेवतां।

ओं गं गणपतये नमः। इति मध्ये गणेशं पुष्पाञ्जलिभिः समभ्यर्च्य निवेदनादिकं कुर्यात्। यथाशक्ति मूलमन्त्रं जप्त्वा देवाय समर्पयेत्। मया कृतेन साङ्गगणेशार्चनेन परमेश्वरः प्रीतो भवतु। इति पूजां समर्पयेत्। अन्यत् क्रमे पूर्वं निर्दिष्टम्।

## सिद्धिविनायकषोडशोपचारपूजास्तुतिः (१)

वक्रतुण्ड महाकाय सूर्यकोटि समप्रभ।
निर्विघ्नं कुरु मे देव सर्व-कार्येषु सर्वदा॥ १॥

एकदन्तं शूर्पकर्णं गजवक्त्रं चतुर्भुजम्।
पाशाङ्कुशधरं देवं वन्दे सिद्धिविनायकम्॥ २॥

वन्दे गजाननं देवं तप्तकाञ्चनसन्निभम्।
चतुर्भुजं महाकायं सर्वाभरण भूषितम्॥ ३॥

अत्रागच्छ जगद्वन्द्य सुरराजार्चितेश्वर।
अनाथनाथ सर्वज्ञ गीर्वाणासुर पूजित॥ ४॥

अनेकरत्न खचितं मुक्तामणिविभूषितम्।
रत्नसिंहासनं चारु गणेश प्रतिगृह्यताम्॥ ५॥

गौरीपुत्र नमस्तेऽस्तु दूर्वापद्मादि संयुतम्।
भक्त्या पाद्यं मया दत्तं गृहाण द्विरदानन॥ ६॥

सिद्धार्थयवदूर्वाभिः गन्धपुष्पाक्षतैर्युतम्।
तिलपुष्पसमायुक्तं गृहाणार्घ्यं गजानन॥ ७॥

कर्पूरागरुपुष्पैश्च वासितं विमलं जलम्।
भक्त्या दत्तं मया देव कुरुष्वाचमनं प्रभो॥ ८॥

दध्याज्य मधु संयुक्तं मधुपर्कं मयाऽऽहृतम्।
गृहाण सर्व लोकेश गजवक्त्र नमोऽस्तु ते॥ ९॥

मध्वाज्य शर्करायुक्तं दधिक्षीरसमन्वितम्।
पञ्चामृतं गृहाणेदं भक्तानामिष्टदायक॥ १०॥

गङ्गादि पुण्यपानीयैः गन्धपुष्पाक्षतै र्युतैः।
स्नानं कुरुष्व भगवन् उमापुत्र नमोऽस्तु ते॥ ११॥

रक्तवस्त्र द्वयं देव राजराजादि पूजित।
भक्त्या दत्तं गृहाणेदं भगवन्हरनन्दन॥ १२॥

राजतं ब्रह्मसूत्रं च काञ्चनं चोत्तरीयकम्।
गृहाण चारु सर्वज्ञ भक्तानामिष्टदायक॥ १३॥

चन्दनागरु कर्पूरकस्तूरी कुङ्कुमान्वितम्।
विलेपनं सुरश्रेष्ठ प्रीत्यर्थं प्रतिगृह्यताम्॥ १४॥

अक्षतान्धवलान्दिव्यान् शालीयानक्षतान् शुभान्।
हरिद्राचूर्णसंयुक्तान् संगृहाण गणाधिप ॥ १५ ॥
सुगन्धीनि सुपुष्पाणि जाजी कुन्दमुखानि च।
एकविंशति संख्यानि गृहाण गणनायक ॥ १६ ॥
चन्दनागुरु कस्तूरी चन्द्रगुग्गुलुसंयुतम्।
धूपं गृहाण वरद धूतपाप नमोऽस्तु ते ॥ १७ ॥
दीपं गृहाण देवेश वर्तित्रयसमन्वितम्।
गणराज नमस्तुभ्यं अज्ञानं विनिवर्तय ॥ १८ ॥
शाल्यन्नं पायसादीनि मोदकांश्च फलानि च।
निवेदितं गृहाणेश नित्यतृप्त नमोऽस्तु ते ॥ १९ ॥
पूगीफलसमायुक्तं नागवल्लीदलैर्युतम्।
कर्पूरचूर्ण संयुक्तं तांबूलं प्रतिगृह्यताम् ॥ २० ॥
चन्द्रादित्यौ ग्रहास्ताराः विद्युदग्नि विभास्वरम्।
त्वमेव सर्वं तत्तेजो नीराजनमिदं प्रभो ॥ २१ ॥
नमो नमो गणेशाय नमस्ते विश्वरूपिणे।
निर्विघ्नं कुरु मे कामं नमामि त्वां गजानन ॥ २२ ॥
अगजाननपद्मार्कं गजाननमहर्निशम्।
अनेकदं तं भक्तानां एकदन्तमुपास्महे ॥ २३ ॥
विनायक वरं देहि महात्मन्मोदकप्रिय।
अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥ २४ ॥
यस्य स्मृत्या च नामोक्त्या तपः पूजा क्रियादिषु।
न्यूनं संपूर्णतां याति सद्यो वन्दे गजाननम् ॥ २५ ॥

## ஸித்த்திவிநாயகஷோடபோபசாரபூஜாஸ்துதி (1)

வக்ர துண்ட மஹாகாய ஸூர்யகோடிஸமப்ரப।
அவிக்நம் குருமே தேவ ஸர்வகார்யேஷு ஸர்வதா ॥ 1 ॥

ஏகதந்தம் ஶூர்பகர்ணம் கஜவக்த்ரம் சதுர்ப்புஜம் ।
பாஶாங்குஶதரம் தேவம் வந்தே ஸித்த்திவிநாயகம் ॥ 2 ॥

வந்தே கஜாநநம் தேவம் தப்தகாஞ்சநஸந்நிபம் ।
சதுர்ப்புஜம் மஹாகாயம் ஸர்வாபரணபூஷிதம் ॥ 3 ॥

அத்ராகச்ச ஜகத்வந்த்ய ஸுரராஜார்சிதேஶ்வர ।
அநாதநாத ஸர்வஜ்ஞ கீர்வாணாஸுரபூஜித ॥ 4 ॥

அநேகரத்னகசிதம் முக்தாமணி விபூஷிதம் ।
ரத்நஸிம்ஹாஸனம் சாரு கணேஶ ப்ரதிக்ருஹ்யதாம் ॥ 5 ॥

கௌரீபுத்ர நமஸ்தேऽஸ்து தூர்வாபத்மாதிஸம்யுதம் ।
பக்த்யா பாத்யம் மயாதத்தம் க்ருஹாணத்விரதாநந ॥ 6 ॥

ஸித்த்தார்த்த யவதூர்வாபி: கந்த்தபுஷ்பாக்ஷதைர்யுதம் ।
திலபுஷ்பஸமாயுக்தம் க்ருஹாணார்க்க்யம் கஜாநந ॥ 7 ॥

கர்பூராகரு புஷ்பைஶ்ச வாஸிதம் விமலம் ஜலம் ।
பக்த்யா தத்தம் மயா தேவ குருஷ்வாசமநம் ப்ரபோ ॥ 8 ॥

தத்த்யாஜ்யமது ஸம்யுக்தம் மது பர்கம் மயாஹ்ருதம் ।
க்ருஹாண ஸர்வலோகேஶ கஜவக்த்ரநமோऽஸ்து தே ॥ 9 ॥

மத்த்வாஜ்ய ஶர்கராயுக்தம் ததிக்ஷீரஸமந்விதம் ।
பஞ்சாம்ருதம் க்ருஹாணேதம் பக்தாநாமிஷ்டதாயக ॥ 10 ॥

கங்காதி புண்யபாநீயை: கந்த்தபுஷ்பாக்ஷதைர்யுதை: ।
ஸ்நானம் குருஷ்வ பகவன் உமாபுத்ர நமோऽஸ்து தே ॥ 11 ॥

ரக்தவஸ்த்ர த்வயம் தேவ ராஜராஜாதி பூஜித ।
பக்த்யா தத்தம் க்ருஹாணேதம் பகவன் ஹரநந்தன ॥ 12 ॥

ராஜதம் ப்ரம் ஹஸூத்ரஞ்ச காஞ்சநம் சோத்தரீயகம் ।
க்ருஹாண சாரு ஸர்வஜ்ஞ பக்தாநாமிஷ்டதாயக ॥ 13 ॥

சந்தனாகருகர்பூர கஸ்தூரீ குங்குமான் விதம் ।
விலேபனம் ஸுரஶ்ரேஷ்ட்ட ப்ரீத்யர்த்தம் ப்ரதி க்ருஹ்யதாம் ॥14॥

அக்ஷதான் த்தவலான் திவ்யான் ஶாலீயாநக்ஷதான் ஶுபான் ।
ஹரித்ராசூர்ணஸம்யுக்தான் ஸங்க்ருஹாண கணாதிப ॥ 15 ॥

ஸுகந்த்தீநி ஸுபுஷ்பாணி ஜாஜீகுந்தமுகாநி ச ।
ஏகவிம்ஶதி ஸங்க்க்யானி க்ருஹாணகணநாயக ॥ 16 ॥

சந்த நாகரு கஸ்தூரீ சந்த்ர குக்குலுஸம்யுதம் ।
தூபம் க்ருஹாண வரத தூதபாப நமோ ஸ்து தே ॥ 17 ॥

தீபம் க்ருஹாண தேவேஶ வர்தித்ரயஸமன்விதம் ।
கணராஜ நமஸ்துப்யம் அஜ்ஞானம் விநிவர்தய ॥ 18 ॥
ஶால்யந்நம் பாயஸாதீநி மோதகாம்ஶ்ச பலாநி ச ।
நிவேதிதம் க்ருஹாணேஶ நித்யத்ருப்த நமோऽஸ்துதே ॥ 19 ॥
பூகீபலஸமாயுக்தம் நாகவல்லீ பத்ரைர்யுதம் ।
கர்பூர சூர்ணஸம்யுக்தம் தாம்பூலம் ப்ரதிக்ருஹ்யதாம் ॥ 20 ॥
சந்த்ராதித்யௌ க்ரஹாஸ்தாரா: வித்யுதக்னிர் விபாஸ்வரம் ।
த்வமேவ ஸர்வம் தத்தேஜோ நீராஜன மிதம் ப்ரபோ ॥ 21 ॥
நமோ நமோ கணேஶாய நமஸ்தே விஶ்வரூபிணே ।
நிர்விக்நம் குருமே காமம் நமாமித்வாம் கஜாநந ॥ 22 ॥
அகஜாநந பத்மார்கம் கஜாநந மஹர்நிஶம் ।
அநேகதம் தம் பக்தாநாம் ஏகதந்தம் உபாஸ்மஹே ॥ 23 ॥
விநாயக வரம் தேஹி மஹாத்மன் மோதகப்ரிய ।
அவிக்நம் குரு மே தேவ ஸர்வகார்யேஷு ஸர்வதா ॥ 24 ॥
யஸ்ய ஸ்ம்ருத்யாச நாமோக்த்யா தப:பூஜாக்ரியாதிஷு ।
ந்யூநம் ஸம்பூர்ணதாம் யாதி ஸத்யோ வந்தே கஜாநனம் ॥ 25 ॥

## सिद्धिविनायकषोडशोपचार पूजास्तुतिः (२)

हृत्पद्मकर्णिकामध्यात्सिद्ध्या देव्या गजानन ।
आगच्छ त्वं महादेव सर्वैरावरणैः सह ॥
देवेश भक्तसुलभ परिवारसमन्वित ।
यावत्त्वां पूजयिष्यामि तावद्देव इहावह ॥
आगच्छ भगवन्देव स्थाने चात्र स्थितो भव ।
यावत्पूजां करिष्यामि तावत्त्वं सन्निधौ भव ॥ (आवाहनम्)
तवेयं महिमा मूर्तिः तस्यां त्वं सर्वगः प्रभो ।
भक्तिस्ने हसमाकृष्ट दीपवत्स्थापयाम्यहम् ॥ (स्थापनम्)
अनन्या तव देवेश मूर्तिशक्तिरियं प्रभो ।
सान्निध्यं कुरु तस्यां त्वं भक्तानुग्रहतत्पर ॥ (सन्निधापनं)
आज्ञया तव देवेश कृपांभोधे गुणांबुधे ।
आत्मानन्दैकतृप्तं त्वां निरुणध्मि पितर्गुरो ॥ (सन्निरोधनम्)

अज्ञानाद्दुर्मनस्त्वाद्वा वैकल्यात्साधनस्य च।
यदपूर्णं भवेत्कृत्यं तदप्यभिमुखो भव॥ (अभिमुखीकरणम्)

अभक्तवाङ्मनश्चक्षुः श्रोत्रदूरातिगद्युते।
स्वतेजः पिञ्जरेणाशु वेष्टितो भव सर्वतः॥ (अवकुण्ठनम्)

यस्य दर्शनमिच्छन्ति देवाः स्वाभीष्टसिद्धये।
तस्मै ते परमेशाय स्वागतं स्वागतं च ते॥ (स्वागतम्)

देवं देव महाराजप्रियेश्वर प्रजापते।
आसनं दिव्यमीशान दास्येऽहं परमेश्वर॥ (आसनम्)

अपराधो भवत्येव सेवकस्य पदे पदे।
कोऽपरः सहतां लोके केवलं स्वामिनं विना॥

स्वागतं देव देवेश मद्भाग्यात्त्वमिहागतः।
प्राकृतं मां च दृष्ट्वा त्वं बालवत्परिपालय॥ (प्रार्थना)

यद्भक्तिलेशसंपर्कात् परमानन्द संभवः।
तस्मै ते चरणाब्जाय पाद्यं शुद्धाय कल्पये॥ (पाद्यम्)

तापत्रयहरं दिव्यं परमानन्दलक्षणम्।
तापत्रय विनिर्मुक्त तवार्घ्यं कल्पयाम्यहम्॥ (अर्घ्यं)

वेदानामपि देवाय वेदानां फलितात्मने।
आचमं कल्पयामीश शुद्धानां शुद्धिहेतवे॥ (आचमनं)

कांस्ये कांस्येन पिहितो दधिमध्वाज्यसंयुतः।
मधुपर्को मयाऽऽनीतः पूजार्थं प्रतिगृह्यताम्॥ (मधुपर्कं)

गङ्गासरस्वतीरेवा कावेरी नर्मदाजलैः।
स्नापितोऽसि मया देव तथा शान्तिं कुरुष्व मे॥ (स्नानम्)

तरुपुष्पसमुद्भूतं सुस्वादु मधुरं मधु।
तेजः पुष्टिकरं दिव्यं स्नानार्थं प्रतिगृह्यताम्॥ (मधुस्नानम्)

कामधेनु समुत्पन्नं सर्वसन्तोषकारकम्।
पयस्तुभ्यं प्रयच्छामि स्नानार्थं प्रतिगृह्यताम्॥ (क्षीरस्नानं)

पयसस्तु समुद्भूतं मधुराम्लं शशिप्रभम्।
दध्यानीतं मया देव स्नानार्थं प्रतिगृह्यताम्॥ (दधिस्नानं)

नवनीतसमुत्पन्नं सर्वसन्तो षकारकम्।
घृतं तुभ्यं प्रदास्यामि स्नानार्थं प्रतिगृह्यताम्॥ (घृतस्नानं)

इक्षुसार समुद्भूता शर्करा पुष्टिकारिका।
मलापहारिका दिव्या स्नानार्थं प्रतिगृह्यताम्॥ (शर्करास्नानं)

पयो दधि घृतं चैव शर्करामधुसंयुतम्।
पञ्चामृतं मयाऽऽनीतं स्नानार्थं प्रतिगृह्यताम्॥ (पञ्चामृतम्)

मन्दाकिन्यास्तु यद्वारि सर्वपापहरं शुभम्।
तदिदं कल्पितं देव स्नानार्थं प्रतिगृह्यताम्॥ (शुद्धोदकस्नानं)

सर्व भूषाधिके सौम्ये लोकलज्जानिवारणे।
मयोपपादिते तुभ्यं वाससी प्रतिगृह्यताम्॥ (वस्त्रं)

अलङ्कारान्महा दिव्यान् नानारत्नविनिर्मितान्।
गृहाण देव देवेश प्रसीद परमेश्वर॥ (आभरणानि)

नवभिस्तन्तुभि र्युक्तं त्रिगुणं देवतामयम्।
उपवीतं चोत्तरीयं गृहाण परमेश्वर॥ (उपवीतम्)

श्रीखण्डं चन्दनं दिव्यं गन्धाढ्यं सुमनोहरम्।
विलेपनं सुरश्रेष्ठ चन्दनं प्रतिगृह्यताम्॥ (गन्धान्)

अक्षताश्च सुरश्रेष्ठ कुङ्कुमाक्ताः सुशोभिताः।
मया निवेदिता भक्त्या गृहाण परमेश्वर॥ (अक्षतान्)

माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो।
मयाऽऽनीतानि पुष्पाणि गृहाण परमेश्वर॥ (पुष्पाणि)

वनस्पति रसोद्भूतो गन्धाढ्यो गन्ध उत्तमः ।
आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥ (धूपं)

सुप्रकाशो महादीपः सर्वतस्तिमिरापहः ।
सबाह्याभ्यन्तरं ज्योतिः दीपोऽयं प्रतिगृह्यताम् ॥ (दीपम्)

सत्पात्रसिद्धं सुहविः विविधानेक भक्षणम् ।
निवेदयामि देवेश सानुगाय गृहाण तत् ॥

ब्रह्मेशाद्यैः सरसमभितः सूपविष्टैः समन्तात्
सिञ्चद्बालव्यजननिकरैर्वीज्यमानः सखीभिः ।

नर्मक्रीडा प्रहसनपरान् पंक्तिभोक्तॄन् हसन्वै
भुंक्ते पात्रे कनकघटिते षड्रसान् श्रीगणेशः ॥

शालीभक्तं सुपक्वं शिशिरकरसितं पायसापूपसूपं
लेह्यं पेयं च चोष्यं सितममृत फलं द्वारिकाद्यं सुखाद्यम् ॥

आज्यं प्राज्यं सुभोज्यं नयनरुचिकरं राजिकैलामरीच
स्वादीयः शाकराजी परिकरममृताहारजोषं जुषस्व ॥ (अन्तः पटं निवेदनम्)

नमस्ते देव देवेश सर्वतृप्तिकरं परम् ।
अखण्डानन्दसंपूर्ण गृहाण जलमुत्तमम् ॥ (पानीयं)

पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम् ।
एला चूर्णादिभिर्युक्तं ताम्बूलं प्रतिगृह्यताम् ॥ (तांबूलं)

इदं फलं मया देव स्थापितं पुरतस्तव ।
तेन मे सत्फलावाप्तिः भवेज्जन्मनि जन्मनि ॥ (फलम्)

कदलीगर्भसंभूतं कर्पूरं च प्रदीपितम् ।
आरार्तिकमहं कुर्वे पश्य मे वरदो भव ॥ (कर्पूरनीराजनम्)

यानि कानि च पापानि जन्मान्तरकृतानि वै ।
तानि तानि विनश्यन्ति प्रदक्षिणपदे पदे ॥ (प्रदक्षिणं)

नाना सुगन्धि पुष्पाणि यथाकालोद्भवानि च।
पुष्पाञ्जलिं मया दत्तं गृहाण परमेश्वर॥ (पुष्पाञ्जलिः)

ज्ञानतोऽज्ञानतो वापि यन्मया क्रियतेऽनिशम्।
मम कृत्यमिदं सर्वं इति देव क्षमस्व मे॥

अपराधसहस्राणि क्रियन्तेऽहर्निशं मया।
दासोऽहमिति मां मत्वा क्षमस्व परमेश्वर॥

अपराधो भवत्येव सेवकस्य पदे पदे।
कोऽपरः सहतां लोके केवलं स्वामिनं विना॥

भूमौ स्खलित पादानां भूमिरेवावलम्बनम्।
त्वयि जातापराधानां त्वमेव शरणं प्रभो।
आवाहनं न जानामि न जानामि विसर्जनम्।
पूजाविधिं न जानामि त्वं गतिः परमेश्वर।
कर्मणा मनसा वाचा त्वत्तो नान्या गतिर्मम।
अन्तश्चरसि भूतानां इष्टस्त्वं परमेश्वर॥

अन्यथा शरणं नास्ति त्वमेव शरणं मम।
तस्मात्कारुण्य भावेन रक्ष रक्ष गणेश्वर॥

शतयोनिसहस्राणां सहस्रेषु व्रजाम्यहम्।
तेषु चेष्टाचला भक्तिः अच्युतास्तु सदा त्वयि॥

गतं पापं गतं दुःखं गतं दारिद्र्यमेव च।
आगता सुख संपत्तिः पुण्याच्च तव दर्शनात्॥

मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर।
यत्पूजितं मया देव परिपूर्णं तदस्तु मे॥

यदक्षर पदभ्रष्टं मात्राहीनं च यद्भवेत्।
तत्सर्वं क्षम्यतां देव प्रसीद परमेश्वर॥

तव पादांबुजे नित्यं निश्चला भक्तिरस्तु मे।
प्रपन्नं पाहि मामीश भीतं मृत्युग्रहार्णवात्॥

साधु वाऽसाधु कर्म यद्यदाचरितं मया।
तत्सर्वं कृपया देव गृहाणाराधनं तव ॥ (प्रार्थना)

गच्छ गच्छ परं स्थानं स्वस्थानं परमेश्वर।
यं हि ब्रह्मादयो देवा न विदुः परमं पदम् ॥

हृत्पद्मकर्णिकामध्यं सिद्ध्या देव्या गजानन।
प्रविश त्वं महादेव सर्वैरावरणैः सह ॥ (हृदयस्थापनम्)

## ஸித்த்திவிநாயகஷோடஶோபசார பூஜாஸ்துதி (2)

ஹ்ருத் பத்மகர்ணிகா மத்த்யா த் ஸித்த்யா தேவ்யா கஜாநந ।
ஆகச்ச த்வம் மஹாதேவ ஸர்வை ராவரணைஸ்ஸஹ ॥
தேவேஶ பக்த ஸுலப பரிவாரஸமன்வித ।
யாவத் த்வாம் பூஜயிஷ்யாமி தாவத்தேவ இஹா வஹ ॥
ஆகச்ச பகவந்தேவ ஸ்த்தாநே சாத்ரஸ்த்திதோ பவ ।
யாவத் பூஜாம் கரிஷ்யாமி தாவத்த்வம் ஸந்நிதௌ பவ ॥
(ஆவாஹனம்)

தவேயம் மஹிமா மூர்த்தி: தஸ்யாம் த்வம் ஸர்வக: ப்ரபோ ।
பக்திஸ்நேஹஸமா க்ருஷ்ட தீபவத் ஸ்த்தாபயாம்யஹம் ॥ ஸ்தாபனம்
அநந்யா தவ தேவேஶ மூர்த்தி ஶக்திரியம் ப்ரபோ ।
ஸாந்நித்த்யம் குரு தஸ்யாம் த்வம் பக்தா நுக்ரஹதத்ப ॥
(ஸந்நிதாபனம்)

ஆஜ்ஞயா தவ தேவேஶ க்ருபாம்போதே குணாம்புதே ।
ஆத்மாநந்தைக த்ருப்தம் த்வாம் நிருணத்த்மி பிதர் குரோ ॥
(ஸந்நிரோதனம்)

அஜ்ஞானாத் துர்மநஸ்த்வாத்வா வைகல்யாத் ஸாதநஸ்ய ச ।
யதபூர்ணம் பவேத் க்ருத்யம் ததப்யபிமுகோ பவ ॥ அபிமுகீகரணம்
அபக்தவாங்கமநஶ் சக்ஷு: ஶ்ரோத்ர தூராதிகத்யுதே ।
ஸ்வதேஜ: பிஞ்ஜரேணாஶு வேஷ்டிதோ பவஸர்வத: ॥
(அவகுண்டநம்)

யஸ்ய தர்ஶ நமிச்சந்தி தேவாஸ் ஸ்வாபீஷ்டஸித்தயே ।
தஸ்மை தே பரமேஶாய ஸ்வாகதம் ஸ்வாகதம் சதே ॥ (ஸ்வாகதம்)
தேவதேவ மஹாராஜ ப்ரியேஶ்வர ப்ரஜாபதே ।
ஆஸநம் திவ்யமீஶாந தாஸ்யேऽஹம் பரமேஶ்வர ॥ (ஆஸனம்)

அபராதோ பவத்யேவ ஸேவகஸ்ய பதே பதே ।
கோऽபரஸ் ஸஹதாம் லோகே கேவலம் ஸ்வாமிநம்விநா ॥
ஸ்வாகதம் தேவதேவேஶ மத்பாக்யாத் த்வமிஹாகத: ॥
ப்ராக்ருதம் மாம் ச த்ருஷ்ட்வாத்வம் பால வத்பரிபாலய ॥
(ப்ரார்த்தனை)

யத்ப்பக்திலேஶ ஸம்பர்காத் பரமாநந்த ஸம்ப்பவ: ।
தஸ்மை தே சரணாப்ஜாய பாத்யம் ஶுத்த்தாய கல்பயே ॥ பாத்யம்

தாப த்ரயஹரம் திவ்யம் பரமாநந்தலக்ஷணம் ।
தாபத்ரய விநிர்முக்த தவார்க்க்யம் கல்பயாம்யஹம் ॥ (அர்க்கியம்)

வேதாநாமபிதேவாய வேதாநாம் ப்பலிதாத்மநே ।
ஆசமம் கல்பயாமீஶ ஶுத்த்தாநாம் ஶுத்த்திஹேதவே ॥ (ஆசமநம்)

காம்ஸ்யே காம்ஸ்யேந பிஹிதோ ததிமத்த்வாஜ்ய ஸம்யுத: ।
மதுபர்கோ மயாऽऽநீத: பூஜார்த்தம் ப்ரதிக்ருஹ்யதாம் ॥ (மதுபர்கம்)

கங்கா ஸரஸ்வதீரேவா காவேரீநர்மதா ஜலை: ।
ஸ்நாபிதோऽஸி மயாதேவ ததா ஶாந்திம் குருஷ்வமே ॥ (ஸ்நாணம்)

தருபுஷ்பஸமுத்ப்பூதம் ஸுஸ்வாது மதுரம் மது ।
தேஜ: புஷ்டி கரம் திவ்யம் ஸ்நானார்த்தம் ப்ரதிக்ருஹ்யதாம் ॥
(மதுஸ்நாணம்)

காமதேநு ஸமுத்பந்நம் ஸர்வஸந்தோஷகாரகம் ।
பயஸ்துப்ப்யம் ப்ரயச்ச்சாமி ஸ்நாநார்த்தம் ப்ரதிக்ருஹ்யதாம் ॥
(க்ஷீரஸ்நாணம்)

பயஸஸ்து ஸமுத்ப்பூதம் மதுராம்லம் ஶஶிப்ரபம் ।
தத்த்யா நீதம் மயாதேவ ஸ்நானார்த்தம் ப்ரதிக்ருஹ்யதாம் ॥
(ததிஸ்நாணம்)

நவனீத ஸமுத்பந்நம் ஸர்வஸந்தோஷகாரகம் ।
க்க்ருதம் துப்ப்யம் ப்ரதாஸ்யாமி ஸ்நாநார்த்தம் ப்ரதிக்ரு ஹ்யதாம் ॥
(கிருதஸ்நாணம்)

இக்ஷுஸார ஸமுத்ப்பூ தா ஶர்கரா புஷ்டிகாரிகா ।
மலாப ஹாரிகா திவ்யா ஸ்நானார்த்தம் ப்ரதிக்ருஹ்யதாம் ॥
(சர்க்கரா ஸ்நாணம்)

பயோததி க்க்ருதம் சைவ ஶர்கரா மது ஸம்யுதம் ।
பஞ்சாம்ருதம் மயாऽऽநீதம் ஸ்நாநார்த்தம் ப்ரதிக்ருஹ்யதாம் ॥
(பஞ்சாமிருதஸ்நாணம்)

மந்தாகின்யாஸ்து யத்வாரி ஸர்வபாபஹரம் ஶுபம் ।
ததிதம் கல்பிதம் தேவ ஸ்நாநார்த்தம் ப்ரதிக்ருஹ்யதாம் ॥
(ஶுத்தோதகஸ் நானம்)

ஸர்வபூஷாதிகே ஸௌம்யே லோகலஜ்ஜாநி வாரணே ।
மயோபபாதிதேதுப்யம் வாஸஸீப்ரதிக்ருஹ்யதாம் ॥ (வஸ்த்ரம்)

அலங்காரான் மஹாதிவ்யான் நாநாரத்நவிநிர்மிதான் ।
க்ருஹாண தேவதேவேஶ ப்ரஸீத பரமேஶ்வர ॥ (ஆபரணாநி)

நவபிஸ் தந்துபிர் யுக்தம் த்ரிகுணம் தேவதாமயம் ।
உபவீதம் சோத்தரீயம் க்ருஹாணபரமேஶ்வர ॥ (உபவீதம்)

ஸ்ரீகண்டம் சந்தநம் திவ்யம் கந்தாட்ட்யம் ஸுமநோஹரம் ।
விலேபநம் ஸுரஶ்ரேஷ்ட்டசந்தநம் ப்ரதிக்ருஹ்யதாம் ॥ (கந்தம்)

அக்ஷதாஶ்ச ஸுரஶ்ரேஷ்ட்ட குங்குமாக்தாஸ் ஸுஶோபிதா: ।
மயா நிவேதிதா பக்த்யா க்ருஹாண பரமேஶ்வர ॥ (அக்ஷதை)

மால்யாதீநி ஸுகந்தீநி மாலத்யாதீநி வை ப்ரபோ ।
மயாநீதாநி புஷ்பாணி க்ருஹாண பரமேஶ்வர ॥ (புஷ்பம்)

வநஸ்பதி ரஸோத்ப்பூதோ கந்தாட்ட்யோ கந்த்த உத்தம: ।
ஆக்க்ரேயஸ்ஸர்வதேவாநாம் தூபோऽயம் ப்ரதிக்ருஹ்யதாம் ॥
(தூபம்)

ஸுப்ரகாஶோ மஹாதீபஸ் ஸர்வதஸ் திமிராபஹ: ।
ஸபாஹ்யாப்ப்யந்தரம் ஜ்யோதிர் தீபோऽயம் ப்ரதிக்ருஹ்யதாம் ॥
(தீபம்)

ஸத்பாத்ரஸித்த்தம் ஸுஹவி: விவிதாநேகபக்ஷணம் ।
நிவேதயாமி தேவேஶ ஸாநுகாய க்ருஹாண தத் ॥

ப்ரம்ஹேஹ சாத்யை: ஸரஸமபிதஸ் ஸூபவிஷ்டைஸ்ஸமந்தாத்
ஸிஞ்சத்வாலவ்யஜந நிகரைர் வீஜ்யமாநஸ் ஸகீபி: ।
நர்மக்ரீடா ப்ரஹஸந பரான் பங்க்திபோக்த்ரூன் ஹஸன்வை
புங்க்தே பாத்ரே கநக கடிதேஷட்ரஸான் ஸ்ரீ கணேஶ: ॥
ஶாலீபக்தம் ஸுபக்வம் ஶிஶிரகரஸிதம் பாயஸாபூபஸூபம்
லேஹ்யம் பேயம் ச சோஷ்யம் ஸிதமம்ருதபலம் த்வாரிகாத்யம்
ஸுகாத்யம் ॥

ஆஜ்யம் ப்ராஜ்யம் ஸுபோஜ்யம் நயனருசிகரம் ராஜிகைலாமரீச
ஸ்வாதீய: மாகராஜீ பரிகர மம்ருதா ஹாரஜோஷம் ஜுஷஸ்வ ॥
(திரை மறைவில் நிவேதநம்)

நமஸ்தே தேவதேவேம ஸர்வத்ருப்திகரம் பரம் ।
அகண்டானந்தஸம் பூர்ணம் க்ருஹாண ஜலமுத்தமம் ॥ (பாளீயம்)

பூகீபலம் மஹத்திவ்யம் நாகவல்லீ தலைர் யுதம் ।
ஏலா சூர்ணாதிபிர் யுக்தம் தாம்பூலம் ப்ரதிக்ருஹ்யதாம் ॥
(தாம்பூலம்)

இதம்ப்பலம் மயாதேவ ஸ்த்தாபிதம் புரதஸ்தவ ।
தேநமே ஸத்ப்பலா வாப்தி: பவேத் ஜந்மநி ஜந்மநி ॥ (பழம்)

கதளீகர்ப்பஸம்பூதம் கர்பூரம் ச ப்ரதீபிதம் ।
ஆரார்திக மஹம் குர்வே பம்ய மே வரதோபவ ॥ (கர்பூரநீராஜநம்)

யாநிகாநி ச பாபாநி ஜந்மாந்தரக்ருதாநி வை ।
தாநிதாநி விநம்யந்தி ப்ரதக்ஷிணபதே பதே ॥ (பிரதக்ஷிணம்)

நாநாஸுகந்த்தி புஷ்பாணி யதாகாலோத்ப்பவாநி ச ।
புஷ்பாஞ்ஜலிம் மயாதத்தம் க்ருஹாணபரமேம்வர ॥ (புஷ்பாஞ்ஜலி)

ஜ்ஞாநதோऽஜ்ஞா நதோவாபி யந்மயாக்ரியதேऽநிமம் ।
மமக்ருத்ய மிதம் ஸர்வம் இதிதேவ க்ஷமஸ்வ மே ॥

அபராதஸஹஸ்ராணி க்ரியந்தேऽஹர் நிமம் மயா ।
தாஸோऽஹ மிதி மாம் மத்வா க்ஷமஸ்வ பரமேம்வர ॥

அபராதோ பவத்யேவ ஸேவகஸ்ய பதே பதே ।
கோऽபரஸ் ஸஹதாம் லோகே கேவலம் ஸ்வாமிநம் விநா ॥

பூமௌ ஸ்க்கலித பாதாநாம் பூமிரேவாவலம்பநம் ।
த்வயி ஜாதா பராதாநாம் த்வமேவ மரணம் ப்ரபோ ॥

ஆவாஹநம் நஜாநாமி நஜாநாமி விஸர்ஜநம் ।
பூஜாவிதிம் நஜாநாமி த்வம் கதி: பரமேம்வர ॥

கர்மணா மநஸாவாசா த்வத்தோ நாந்யாகதிர்மம ।
அந்தம் சரஸிபூதாநாம் இஷ்டஸ்த்வம் பரமேம்வர ॥
அந்யதா மரணம் நாஸ்தி த்வமேவ மரணம் மம ।
தஸ்மாத் காருண்யப்பாவேந ரக்ஷ ரக்ஷ கணேம்வர ॥

மதயோநி ஸஹஸ்ராணாம் ஸஹஸ்ரேஷு வ்ரஜாம்யஹம் ।
தேஷு சேஷ்டா அசலா பக்தி: அச்யுதாஸ்து ஸதாத்வயி ॥

கதம் பாபம் கதம் துக்கம் கதம் தாரித்ர்யமேவ ச।
ஆகதா ஸுகஸம்பத்தி: புண்யாச்ச தவதர்ஶநாத்॥

மந்த்ரஹீநம் க்ரியாஹீநம் பக்திஹீநம் ஸுரேஶ்வர।
யத்பூஜிதம் மயாதேவ பரிபூர்ணம் ததஸ்துமே॥

யதக்ஷரபதப்ரஷ்டம் மாத்ராஹீநம் சயத்பவேத்।
தத்ஸர்வம் க்ஷம்யதாம் தேவ ப்ரஸீத பரமேஶ்வர॥
தவபாதாம்புஜே நித்யம் நிஶ்சலா பக்திரஸ்துமே।
ப்ரபந்நம் பாஹி மாமீஶ பீதம் ம்ருத்யுக்ரஹார்ணவாத்॥

ஸாதுவாऽஸாதுவா கர்ம யத்யதாசரிதம் மயா।
தத்ஸர்வம் க்ருபயா தேவ க்ருஹாணாராதநம் தவ॥ (பிரார்த்தனை)

கச்ச கச்சபரம் ஸ்த்தாநம் ஸ்வஸ்த்தாநம் பரமேஶ்வர।
யம் ஹிப்ரம்ஹாதயோ தேவா: நவிது: பரமம் பதம்॥

ஹ்ருத்பத்மகர்ணிகா மத்த்யம் ஸித்த்யா தேவ்யா கஜாநந।
ப்ரவிஶ த்வம் மஹாதேவ ஸர்வைராவரணைஸ்ஸஹ॥

(ஹ்ருதயஸ்தாபனம்)

## सङ्कटहरचतुर्थीपूजा

सङ्कल्पः - शुक्लाम्बर + मासे कृष्णचतुर्थ्यां शुभतिथौ श्रीमहागणपति प्रीत्यर्थं सङ्कट(ष्ट)हरचतुर्थी पूजां यथाशक्ति करिष्ये। (कलशपूजादिकं सिद्धिविनायक पूजावत्।)

ध्यानं - एकदन्तं महाकायं तप्तकाञ्चनसन्निभम्।
लंबोदरं विशालाक्षं वन्देऽहं गणनायकम्॥
आखुपृष्ठसमासीनं चामरैर्वीजितं गणैः।
शेषयज्ञोपवीतं च चिन्तयामि गजाननम्॥

आवाहनं - आगच्छ देव देवेश सङ्कटं मे निवारय।
यावत्पूजा समाप्येत तावत्त्वं सन्निधौ भव॥

आसनं - गणाधीश नमस्तेऽस्तु सर्वसिद्धिप्रदायक।
आसनं गृह्यतां देव सङ्कटं मे निवारय॥

पाद्यं - उमापुत्र नमस्तेऽस्तु नमस्ते मोदकप्रिय।
पाद्यं गृहाण देवेश सङ्कटं मे निवारय॥

अर्घ्यं - लम्बोदर नमस्तेऽस्तु रत्नयुक्तं फलान्वितम्।
अर्घ्यं गृहाण देवेश सङ्कटं मे निवारय॥

आचमनीयं- गङ्गादिसर्वतीर्थेभ्यः आहृतं जलमुत्तमम्।
गृहाणाचमनीयार्थं सङ्कटं मे निवारय॥

स्नानं - पयोदधियुतं चैव शर्करामधुसंयुतम्।
पञ्चामृतं गृहाणेदं सङ्कटं मे निवारय॥
कवेरजासिन्धुगङ्गा कृष्णागोदोद्भवैर्जलैः।
स्नापितोऽसि मया भक्त्या सङ्कटं मे निवारय॥

वस्त्रं - इभवक्त्र नमस्तुभ्यं गृहाण परमेश्वर।
वस्त्र युग्मं गणाध्यक्ष सङ्कटं मे निवारय॥

उपवीतं - विनायक नमस्तुभ्यं नमः परशुधारिणे।
उपवीतं गृहाणेदं सङ्कटं मे निवारय॥

गन्धाः - ईशपुत्र नमस्तुभ्यं नमो मूषिकवाहन।
चन्दनं गृह्यतां देव सङ्कटं मे निवारय॥

अक्षताः - घृतकुङ्कुम संयुक्ताः तण्डुलाः सुमनोहराः।
अक्षतास्ते नमस्तुभ्यं सङ्कटं मे निवारय॥

पुष्पाणि - चंपकं मल्लिकां दूर्वाः पुष्पजातीरनेकशः।
गृहाण त्वं गणाध्यक्ष सङ्कटं मे निवारय॥

ओं..... नमः।

| | | | |
|---|---|---|---|
| सुमुखाय। | लंबोदराय। | धूमकेतवे। | वक्रतुण्डाय। |
| एकदन्ताय। | विकटाय। | गणाध्यक्षाय। | शूर्पकर्णाय। |
| कपिलाय। | विघ्नराजाय। | फालचन्द्राय। | हेरम्बाय। |
| गजकर्णकाय। | विनायकाय। | गजाननाय। | स्कन्दपूर्वजाय। |

(दूर्वायुग्मैः अर्चनां कुर्यात्)

(ओं .... नमः)

| | | |
|---|---|---|
| गणाधिपाय | ईशपुत्राय | अमरेशाय |
| उमापुत्राय | सर्वसिद्धिप्रदाय | गजकर्णकाय |
| अघनाशनाय | लम्बोदराय | नागयज्ञोपवीतिने |
| एकदन्ताय | वक्रतुण्डाय | फालचन्द्राय |
| इभवक्त्राय | मोदकप्रियाय | परशुधारिणे |
| मूषिकवाहनाय | विघ्नविध्वंसकर्त्रे | विघ्नाधिपाय |
| विनायकाय | विश्ववन्द्याय | विद्याप्रदाय (२१) |

धूपः - लम्बोदर महाकाय धूम्रकेतो सुवासितम्।
धूपं गृहाण देवेश सङ्कटं मे निवारय॥

दीपं - विघ्नान्धकार संहार कारक त्रिदशाधिप।
दीपं गृहाण देवेश सङ्कटं मे निवारय॥

नैवेद्यं - मोदकापूपलड्डुक पायसं शर्करान्वितम्।
पक्वान्नं सघृतं देव नैवेद्यं प्रतिगृह्यताम्॥

फलानि - नारिकेल फलं द्राक्षा रसालं दाडिमं शुभम्।
फलं गृहाण देवेश सङ्कटं मे निवारय॥

ताम्बूलं - क्रमुकैलालवङ्गानि नागवल्लीदलानि च।
तांबूलं गृह्यतां देव सङ्कटं मे निवारय॥

नीराजनं - कर्पूरानलसंयुक्तं अशेषाघौघनाशनम्।
नीराजनं गृहाणेश सङ्कटान्मां विमोचय॥

पुष्पाञ्जलिः - चम्पकाशोकवकुल पारिजात भवैः सुमैः।
पुष्पाञ्जलिं गृहाणेमं सङ्कटान्मां विमोचय॥

स्तुतिः - त्वमेव विश्वं सृजसीभवक्त्र त्वमेव विश्वं परिपासि देव।
त्वमेव विश्वं हरसेऽखिलेश त्वमेव विश्वात्मक आविभासि॥

नमामि देवं गणनाथमीशं विघ्नेश्वरं विघ्नविनाशदक्षम्।
भक्तार्तिहं भक्तविमोक्षदक्षं विद्याप्रदं वेदनिदानमाद्यम्॥
ये त्वामसंपूज्य गणेश नूनं वाञ्छन्ति मूढाः विहितार्थसिद्धिम्।
त एव नष्टा नियतं हि लोके ज्ञातो मया ते सकलः प्रभावः॥

ओं नमो हेरम्ब मदमोदित मम सङ्कटं निवारय स्वाहा इति २१ वारं जप्त्वा, पुनः दूर्वया एकविंशतिनामभिः अर्चेत्।

अर्घ्यं - तिथीनामुत्तमे देवि गणेशप्रियवल्लभे।
सङ्कटं हर मे देवि गृहाणार्घ्यं नमोऽस्तु ते॥
चतुर्थी तिथिदेवतायै इदमर्घ्यम्। (७ वारं)
लम्बोदर नमस्तुभ्यं सततं मोदकप्रिय।
सङ्कटं हर मे देव गृहाणार्घ्यं नमोऽस्तु ते॥
सङ्कटहर विघ्नेशाय नमः इदमर्घ्यम्। (७ वारं)
क्षीरोदार्णव संभूत अत्रिगोत्र समुद्भव।
गृहाणार्घ्यं मया दत्तं रोहिणीसहितः शशिन्॥
चन्द्राय नमः इदमर्घ्यम्। (७ वारमर्घ्यं दद्यात्।)

समर्पणम् - इदं सङ्कटहरचतुर्थीपूजात्मकं कर्म महागणपत्यर्पणमस्तु॥

## ஸங்கடஹர சதுர்த்தீ பூஜை

*ஸங்கல்பம் - ஶுக்லாம்பர + மாஸே கிருஷ்ண சதுர்த்த்யாம் ஶுபதிதௌ ஸ்ரீமஹா கணபதி ப்ரீத்யர்த்தம் ஸங்க (ஷ்) டஹர சதுர்த்தீ பூஜாம் யதாஶக்தி கரிஷ்யே। (கலசபூஜை முதலியவை ஸித்த்திவிநாயக பூஜையில் குறிப்பிட்டது போல்.)*

*தியானம் - ஏகதந்தம் மஹாகாயம் தப்தகாஞ்சநஸந்நிபம்।*
*லம்போதரம் விஶாலாக்ஷம் வந்தேஹம் கணநாயகம்॥*
*ஆகுப்ருஷ்ட்ட ஸமாஸீநம் சாமரைர் வீஜிதம் கணை:।*
*ஶேஷயஜ்ஞோபவீதம் ச சிந்தயாமி கஜாநநம்॥*

*ஆவாஹநம் - ஆகச்ச்ச தேவதேவேஶ ஸங்கடம்மே நிவாரய।*
*யாவத் பூஜா ஸமாப்யேத தாவத் த்வம் ஸந்நிதௌ பவ॥*

*ஆஸநம் - கணாதிப நமஸ்தேஸ்து ஸர்வஸித்த்தி ப்ரதாயக।*
*ஆஸநம் க்ருஹ்யதாம் தேவ ஸங்கடம் மே நிவாரய॥*

பாத்யம் - உமா புத்ர நமஸ்தேऽஸ்து நமஸ்தே மோதக ப்ரிய ।
பாத்யம் க்ருஹாண தேவேஶ ஸங்கடம்மே நிவாரய ॥

அர்க்க்யம் - லம்போதர நமஸ்தேऽஸ்து ரத்நயுக்தம் பலாந்விதம் ।
அர்க்க்யம் க்ருஹாண தேவேஶ ஸங்கடம் மே நிவாரய ।

ஆசமநீயம் - கங்காதிஸர்வதீர்த்தேப்ப்ய: ஆஹ்ருதம் ஜலமுத்த மம் ।
க்ருஹாணாசம நீயார்த்தம் ஸங்கடம்மேநிவாரய ॥

ஸ்நானம் - பயோ ததி க்க்ருதம் சைவ ஶர்கரா மதுஸம்யுதம் ।
பஞ்சாம்ருதம் க்ருஹாணேதம் ஸங்கடம் மே நிவாரய ॥

கவேரஜாஸிந்த்து கங்கா க்ருஷ்ணாகோதோத்ப்பவைர்ஜலை: ।
ஸ்நாபிதோऽஸிமயா பக்த்யா ஸங்கடம் மேநிவாரய ॥

வஸ்த்ரம் - இபவக்த்ர நமஸ்துப்ப்யம் க்ருஹாண பரமேஶ்வர ।
வஸ்த்ரயுக்மம் கணாத்த்யக்ஷ ஸங்கடம் மே நிவாரய ॥

உபவீதம் - விநாயக நமஸ்துப்ப்யம் நம: பரஶுதாரிணே ।
உபவீதம் க்ருஹாணேதம் ஸங்கடம் மே நிவாரய ॥

கந்தம் - ஈஶபுத்ர நமஸ்துப்ப்யம் நமோ மூஷிகவாஹந ।
சந்தனம் க்ருஹ்யதாம் தேவ ஸங்கடம் மே நிவாரய ॥

அக்ஷதை - க்ருத குங்குமஸம்யுக்தா: தண்டுலாஸ் ஸுமநோஹரா: ।
அக்ஷதாஸ் தே நமஸ்துப்ப்யம் ஸங்கடம் மே நிவாரய ॥

புஷ்பம் - சம் பகம் மல்லிகாம் தூர்வா: புஷ்பஜாதீ ரநேகஶ: ।
க்ருஹாணத்வம் கணாத்த்யக்ஷ ஸங்கடம் மே நிவாரய

இரண்டு அருகம் புற்களைக் கொண்டு அர்ச்சனை செய்யவும்.

ஓம் – நம:

| | | |
|---|---|---|
| கணாதிபாய | ஈஶபுத்ராய | அமரேஶாய |
| உமாபுத்ராய | ஸர்வஸித்த்திப்ரதாய | கஜகர்ணகாய |
| அகநாஶநாய | லம்போதராய | நாகயஜ்ஞோபவீதிநே |
| ஏகதந்தாய | வக்ரதுண்டாய | ப்பாலசந்த்ராய |
| இபவக்த்ராய | மோதகப்ரியாய | பரஶுதாரிணே |
| மூஷிகவாஹநாய | விக்க்நவித்த்வம்ஸகர்த்ரே | விக்க்நாதிபாய |
| விநாயகாய | விஶ்வவந்த்யாய | வித்யாப்ரதாய (21) |

தூபம் - லம்போதர மஹாகாய தூம்ரகேதோ ஸுவாஸிதம் ।
தூபம் க்ருஹாண தேவேஶ ஸங்கடம் மேநிவாரய ॥

தீபம் - விக்க்நாந்த்த காரஸம்ஹாரகாரக த்ரிதஶாதிப ।
தீபம் க்ருஹாண தேவேஶ ஸங்கடம் மே நிவாரய ॥

நைவேத்யம் - மோத காபூப லட்டுக பாயஸம் ஶர்கரான்விதம் ।
பக்வாந்நம் ஸக்க்ருதம் தேவ நைவேத்யம் ப்ரதிக்ருஹ்யதாம் ॥

பழங்கள் - நாரிகேல ப்பலம் த்ராக்ஷா ரஸாலம் தாடிமம் ஶுபம் ।
ப்பலம் க்ருஹாண தேவேஶ ஸங்கடம் மே நிவாரய ॥

தாம்பூலம் - க்ரமுகைலா லவங்காநி நாகவல்லீ தலானி ச ।
தாம்பூலம் க்ருஹ்யதாம் தேவ ஸங்கடம் மே நிவாரய ॥

நீராஜநம் - கர்பூரா நல ஸம்யுக்தம் அசேஷா கௌக நாஶநம் ।
நீராஜநம் க்ருஹாணேஶ ஸங்கடான் மாம் விமோசய ॥

புஷ்பாஞ்ஜலி - சம் பகாஶோக வகுள பாரிஜாதப்பவைஸ் ஸுமை: । புஷ்பாஞ்ஜலிம் க்ருஹாணேமம் ஸங்கடான் மாம் விமோசய ॥

துதி - த்வமேவ விஶ்வம் ஸ்ருஜஸீபவக்த்ர
த்வமேவ விஶ்வம் பரிபாஸி தேவ ।
த்வமேவ விஶ்வம் ஹரஸே கிலேஶ
த்வமேவ விஶ்வாத்மக ஆவிபாஸி ॥
நமாமி தேவம் கணநாத மீஶம்
விக்க்நேஶ்வரம் விக்க்ந விநாஶதக்ஷம் ।
பக்தார்திஹம் பக்த விமோக்ஷ தக்ஷம்
வித்யாப்ரதம் வேத நிதான மாத்யம் ॥
யே த்வாம் அஸம்பூஜ்ய கணேஶ நூநம்
வாஞ்ச்சந்தி மூடா: விஹிதார்த்தஸித்திம் ।
த ஏவ நஷ்டா: நியதம் ஹி லோகே
ஜ்ஞாதோ மயா தே ஸகல: ப்ரபாவ: ॥

ஓம் நமோ ஹேரம்ப மதமோதித மமஸங்கடம் நிவாரய ஸ்வாஹா (என்ற மந்திரம் உபதே சமாயிருந்தால் 21 தடவை ஜபிக்கவும்) பிறகு அருகம்புல்லால் மறுபடி 21 நாமங்களைக் கொண்டு அர்ச்சனை செய்யவும்)

அர்க்க்யம் - திதீநாமுத்தமே தேவி கணேஸ ப்ரியவல்லபே ।
ஸங்கடம் ஹரமே தேவி க்ருஹாணார்க்க்யம் நமோ஽ஸ்து தே॥
சதுர்த்தீ திதிதேவதாயை இதமர்க்க்யம் । (7 தடவை)
லம்போதர நமஸ்துப்ப்யம் ஸததம் மோதகப்ரிய ।
ஸங்கடம் ஹரமேதேவ க்ருஹாணார்க்க்யம் நமோ஽ஸ்து தே॥

ஸங்கடஹரவிக்க்நேஸாய நம: - இதமர்க்க்யம் (7 தடவை)
க்ஷீரோதார்ணவ ஸம்ப்பூத அத்ரிகோத்ர ஸமுத்ப்பவ ।
க்ருஹாணார்க்க்யம் மயாதத்தம் ரோஹிணீஸஹித: ஸஸிந் ॥
சந்த்ராய நம: இதமர்க்க்யம் (7 தடவை)

ஸமர்பணம் - இதம் ஸங்கடஹர சதுர்த்தீ பூஜாத்மகம் கர்ம ஸ்ரீமஹா கணபத்யர்பண மஸ்து.

## विघ्नस्त्वं विघ्नवारणः

परस्पर-मुखालोक - फलायितगणेश्वरौ ।
जगतो विघ्नहरणे दीक्षितौ तौ शिवौ स्तुमः ॥

உலகின் இடையூறுகளைக்களைவதில் சிவனும் பார்வதியும் முனைந்தவராகி ஒருவருக்கொருவர் முகத்தை உற்றுநோக்கக் கணேசர் என்ற பழம் கனிந்து தனி உருப்பெற்றது•அவர்களைத் துதிப்போம்.

पाशेन पाशहन्तारं अङ्कुशेन निरङ्कुशम् ।
सुकृत्ये चोदयन्तं त्वां नौम्यभीतिवरप्रदम् ॥

பாசத்தால் பாசத்தைப் போக் குபவரும் அங்குசத்தால் தடையின்றி நற்பணியில் தூண்டுபவரும் அபயமளித்துக் கோரியதைத் தருபவருமான உம்மைத் துதிக்கிறேன்.

गुणेश ! विघ्नस्त्वं भूयाः कुकृत्यान्मम वारणे ।
शुण्डाग्रेण नयेः कृत्ये शोभने विघ्नवारणः ॥

கணேசரே ! என்னைக் கெட்டசெயலில் ஈடுபடாதபடி தடுக்க விக்னர் (தடைசெய்பவர்) ஆவீர். நற்பணியில் தடைநீக் குபவராகித்துதிக்கையால் வழிநடத்திச் செல்வீர்.

## सङ्कटहरचतुर्थी पूजा - लघुः क्रमः ।

ओं गजास्याय नमः - आवाहयामि । ओं विघ्नराजाय नमः - आसनं समर्पयामि । ओं लम्बोदराय नमः - पाद्यं समर्पयामि । ओं शङ्करसूनवे नमः अर्घ्यं समर्पयामि । ओं उमापुत्राय नमः - स्नानं समर्पयामि । ओं वक्रतुण्डाय नमः - चर्चनं समर्पयामि । ओं शूर्पकर्णाय नमः - वस्त्राणि समर्पयामि । ओं कुब्जाय नमः - उपवीतं समर्पयामि । ओं गणेश्वराय नमः - गन्धान्धारयामि । ओं विघ्नविनाशिने नमः पुष्पैः - पूजयामि । ओं विकटाय नमः धूपं आघ्रापयामि । ओं वामनाय नमः दीपं दर्शयामि । ओं सर्वदेवाय नमः - अमृतोपहारं निवेदयामि । ओं सर्वार्तिनाशिने नमः - फलं समर्पयामि । ओं विघ्नहर्त्रे नमः - ताम्बूलं समर्पयामि । ओं धूम्राय नमः - प्रदक्षिणं समर्पयामि । ओं देवेशाय नमः - नमस्करान् समर्पयामि ।

(चर्चनं - गन्धतैलादिलेपः)

अर्घ्यं - तिथीनामुत्तमे देवि गणेशप्रियवल्लभे ।
गृहाण त्वं मया दत्तं चतुर्थ्यर्घ्यं नमोऽस्तुते ।
क्षीरसागर संभूत लक्ष्मीबन्धो निशाकर ।
गृहाणार्घ्यं मया दत्तं रोहिण्या सहितः शशिन् ॥
लम्बोदर नमस्तेऽस्तु सर्वकामफलप्रद ।
वाञ्छितं देहि मे त्वं च सर्वविघ्नविनाशकृत् ॥

## मासि मासि सङ्कटहर चतुर्थी पूजा

द्वादशस्वपि मासेषु पृथङ्नामभिरर्चयेत् ।
विनायकश्चैकदन्तः कृष्णपिङ्गो गजाननः ॥
लम्बोदरो भालचन्द्रो हेरम्बो विकटस्तथा ।
वक्रतुण्डश्चाखुवाहो विघ्नराजो गणाधिपः ॥
नाम्नां द्वादशभिश्चैतैः गणेशं पूजयेद्व्रती ।

भद्रे ! भाद्रपदे मासि संकष्टचा या चतुर्थिका।
अनेकफलदा प्रोक्ता सर्वसिद्धिप्रदायिनी ॥

चतुर्थी चाश्विने कृष्णा सङ्कटा व्रतमुत्तमम्।
दूर्वाहरिद्रयोर्होमात्सप्तद्वीपवतीपतिः।
ऊर्ज (कार्तिक) कृष्णचतुर्थ्यां तु सङ्कष्टव्रतमुत्तमम्।
माषान्नैश्च घृतै र्होमैः सर्वसिद्धिर्भवेन्नृणाम् ॥

मार्गशीर्षे तु या कृष्णा चतुर्थी सङ्कटा भवेत्।
अष्टौ च होमयेद् द्रव्यं वैरी तु वशतामियात् ॥

पौषे मासि महादेवि ! विघ्नहन्त्री चतुर्थिका।
तस्यां लम्बोदरः पूज्यः पेयं गोमूत्रमेव हि ॥

हविष्यान्नघृतै र्होमो राजवश्यार्थमेव च।
माघमासे गणाध्यक्षं फालचन्द्रं प्रपूजयेत्।
मोदकान्कारयेन्मातः तिलजान्दश पार्वति।
देवाग्रे स्थापयेत्पञ्च पञ्च विप्राय कल्पयेत्।
पूजयित्वा च तं विप्रं भक्तिभावेन देववत्।
दक्षिणां च यथाशक्ति मोदकान्पञ्च दापयेत्।
फाल्गुनस्यासिते पक्षे हेरम्बाख्यो गणेश्वरः।
पायसैः करवीरैश्च पुष्पैर्वंश्यैश्च होमयेत्।
घृतं च शर्करा चैव भोजनं कथ्यते बुधैः ॥
चैत्रकृष्ण चतुर्थी या व्रतं संकष्टनाशनम्।
बीजपूरैर्घृतैर्होमैः वन्ध्या स्त्री पुत्रमाप्नुयात् ॥
वैशाखस्यासिते पक्षे चतुर्थ्यां तद्दिने व्रतम्।
पूजनीयो वक्रतुण्डो भोजनं शतपत्रकम् ॥

मासज्येष्ठेऽसिते पक्षे गणेशस्य चतुर्थिका।
सौभाग्यदायिनी देवी पतिदा सा प्रकीर्तिता ॥

तस्यामाखुरथः पूज्यो विधिना भक्तिचेतसा।
भोजनं च घृतं दिव्यं ब्राह्मणान्भोजयेत्तदा॥
पार्थ आषाढमासे तु लम्बोदर इति स्मृतः।
पूजनीयो गणाध्यक्षः पूर्वोक्तविधिना ततः॥
अधिमास्यसिते पक्षे चतुर्थ्यां तु विधूदये।
पूजनीयो विधानेन विघ्नहा नृपसत्तम॥
यथा चोत्पद्यते शक्तिर्भक्तिभावेन चार्चयेत्।
पञ्चामृतेन च स्नायात् रक्तपुष्पैः प्रपूजयेत्।
गन्ध धूपैश्च नैवेद्यैः दूर्वायुग्मैः सुवासितैः।
मोदकान्पञ्चदशकान् घृतशर्करया युतान्।
कृत्वा पञ्च गणेशाय पञ्च विप्राय दापयेत्।
कुमार्यै वटकान्दत्वा स्वयं पश्चाच्च भोजयेत्।
राजन्कृष्ण चतुर्थ्यां च पूजनीयो गणाधिपः।
पञ्चामृतैः षोडशभिः उपचारैश्च पूजनम्॥
रक्तैः करवीरपुष्पै नैवेद्यैर्मोदकादिभिः।
रक्तपुष्पाक्षतै दूर्वाग्राभि र्नामपदैः पृथक्॥
विश्वप्रियायेत्याचमनं, स्नानं च ब्रह्मचारिणे।
वस्त्रं गणेश्वरायेति पुष्टिदायेति चन्दनम्॥
विनायकाय पुष्पाणि धूपं चोमासुताय च।
दीपं रुद्रप्रियायेति नैवेद्यं विघ्ननाशिने।
तांबूलं फलदायेति फलं सङ्कष्टनाशिने॥
ततः संप्रार्थयेद्देवं विघ्नेशं तं गणाधिपम्।
संसारपीडाव्यथितं भयार्तं क्लेशार्दितं मां सुमुख प्रसीद।
त्रायस्व मां दुःखदरिद्रनाशन नमो नमो विघ्नविनाशनाय॥
पुष्पाञ्जल्यामिमं मन्त्रं चन्द्रायार्घ्यं प्रदापयेत्।
ब्राह्मणे भोजनं दत्वा मोदकान्दक्षिणान्वितान्।
पश्चात्स्वयं तु भुञ्जीत देवब्राह्मणशेषतः।



**श्री महागणपतिः**

बीजापूरगदेक्षुकार्मुकरुजाचक्राब्जपाशोत्पल-
व्रीह्यग्रस्वविषाण रत्नकलशप्रोद्यत्कराम्भोरुहः ।
पायाद् वल्लभया सपद्मकरया श्लिष्टो ज्वलद्भूषया
विश्वोत्पत्तिविपत्तिसंस्थितिकरो विघ्नेश इष्टार्थदः ॥

ஸ்ரீ மஹாகணபதி

भूमिशायी जितक्रोधो लोभदंभविवर्जितः ।
प्रतिमासं युतः कुर्यात् व्रतं हेरम्बतुष्टये ॥

## गणपतितालम्

गजमुखवक्त्रं गिरिसुतपुत्रं गणगुणमित्रं गणपतिमीशप्रियम् ।
करधृतपरशुं कङ्कणपाणिं कवलितपद्मरुचिम् ।
सुरपतिवन्द्यं सुन्दरनृत्तं सुरचितमणि मकुटं
प्रणमत देवं प्रकटितताळं षड्गिरितत्तताळमिदम् ॥

लम्बोदरवर गुञ्जासुरकृत कुङ्कुमवर्णधरं
श्वेतसुशृङ्गं मोदकहस्तं प्रीतिसपनसफलं
तत्तत्तनयन त्रयवर नागविभूषित नानागणपतिदं
धवलित जलधरधवलित चन्द्रं फणिमणिकिरणविभूषित खड्गं
तनुतनुविषहर शूलकपालं हर हर शिव शिव गणपतिमभयम् ।
कटतट विगलितमदजल जलधितगणपतिवाद्यमिदं
शकलित शशिकला मौलिनं शूलिनं
विमलशुभकमलजलपादुकं पाणिमं
प्रमथगणगुणकथितशोभनं शोभितं
पृथुलभुजसरसिज विषाणकं पोषणं
पनसफलकदलीफलमोदकं मोदकं
प्रणतगुरु शिवतनय गणपति तालनं
जय विजयीभव जय विजयी भव ॥

## श्रीगणेशदेवालये पूजा

(श्री गणेशसन्निधिमुपगम्य घण्टां सन्ताड्य - आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य) शुभतिथौ श्रीपरमेश्वरप्रीत्यर्थं महागणपतिप्रसा दसिद्ध्यर्थं श्रीमहागणपति पूजां करिष्ये (इति सङ्कल्प्य सकलीकृत्य)

ओं गां सर्वेश्वराय नमः (शिरसि) ओं गीं गजमुखाय नमः (मुखे) ओं गूं विघ्नहन्त्रे नमः - (नेत्रयोः) ओं गैं श्रीकण्ठाय नमः - (कण्ठे) ओं गौं स्कन्दप्रियाय नमः - (भुजयोः) ओं गः पाशाङ्कुशहस्ताय नमः (हस्तयोः) ओं गां गणनाथाय नमः - (हृदये) ओं गीं लम्बोदराय नमः - (उदरे) ओं गूं हेरम्बाय नमः - (कट्यां) ओं गैं आखुवाहनाय नमः (ऊर्वोः) ओं गौं विघ्नेश्वराय नमः - (जान्वोः) ओं गः गणेश्वराय नमः - (पादयोः) ओं गणानां त्वा गणपतिं हवामहे गों ईशानमूर्ध्ने नमः - (शिरसि) ओं कविं कवीनाम् गें तत्पुरुषवक्त्राय नमः - (वक्त्रे) ओं उपमश्रवस्तमम् गूं अघोरहृदयाय नमः - (हृदये) ओं ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पते गीं वामदेवगुह्याय नमः - (गुह्ये) ओं आ नः शृण्वन्नूतिभिस्सीद सादनम् गं सद्योजातपादाभ्यां नमः । (पादयोः) ओं गां हृदयाय नमः । ओं गीं शिरसे नमः । ओं गूं शिखायै नमः । ओं गैं कवचाय नमः । ओं गौ नेत्रत्रयाय नमः । ओं गः अस्त्राय नमः इति व्यापकन्यासं कृत्वा

(पाद्यार्घ्याचमनीयपात्राणि परिकल्प्य सामान्यार्घ्योदकेन द्वारं) ओं हां शिवास्त्राय नमः - (इति सम्प्रोक्ष्य द्वारस्योर्ध्वभागे (दक्षिणे) ओं गं गणपतये नमः । (उत्तरे) ओं सं सरस्वत्यै नमः । (मध्ये) ओं मं महालक्ष्म्यै नमः । (उभयपार्श्वयोः) ओं भुवङ्गाय नमः । ओं पतङ्गाय नमः । ओं कूष्माण्डाय नमः । ओं कुण्डोदराय नमः । सर्वेभ्यो गणेशद्वारपालेभ्यो नमः । (इति सम्पूज्य विनायकस्याग्रे) ओं मं महामूषकाय नमः (नैवेद्याद्युपचारं विधाय अन्तर्गत्वा) (नैरृत्यां) ओं हां वास्तुदेवाय नमः । (वारुण्यां) ओं हां सरस्वत्यै नमः । (वायव्यां) ओं हां महालक्ष्म्यै नमः । (सोमदिशि) ओं हां समृध्यै नमः । (ऐशान्यां) ओं हां विजयाय नमः । इति सम्पूजयेत् ।

(चिन्तामणिपीठे) ओं हां आधारशक्त्यै नमः । ओं हां अनन्तासनाय नमः । (आसनस्याग्नेयादि विदिक्षु) ओं हां धर्माय नमः । ओं हां ज्ञानाय नमः । ओं हां वैराग्याय नमः । ओं हां ऐश्वर्याय नमः । (उपर्युपरि क्रमेण) ओं हां कन्दाय नमः । ओं हां बीजाय नमः । ओं हां अङ्कुराय नमः । ओं हां

नाळाय नमः । ओं हां कण्टकेभ्यो नमः । ओं हां दलेभ्यो नमः । ओं हां केसरेभ्यो नमः । ओं हां कर्णिकायै नमः । ओं हां पद्माय नमः । (प्रागादि क्रमेण) ओं तीव्रायै नमः । ओं ज्वालिन्यै नमः । ओं नन्दायै नमः । ओं भोगदायै नमः । ओं कामरूपिण्यै नमः । ओं उग्रायै नमः । ओं तेजोवत्यै नमः । ओं सत्यायै नमः । (मध्ये) ओं विघ्ननाशिन्यै नमः । ओं ह्रीं गं सर्वशक्तिकमलासनाय नमः । ओं हां गणपत्यासनाय नमः । ओं हां गणपतिमूर्तये नमः । ओं हां विद्यादेहाय नमः । ओं हां नेत्राभ्यां नमः । ओं हां गं गणपतये नमः । (इति मूलेन गणानां त्वेति मन्त्रेण एकदन्तायेति गणपति गायत्र्या चावाह्य पूर्वोक्त गणेशव्यापकन्यासं गणेशस्य तत्तत्स्थलेषु विन्यस्य पाशाङ्कुशत्रिखण्डयोनिनमस्कारमुद्राः प्रदर्श्य ध्यायेत्।)

''सिन्दूराभं त्रिणेत्रं पृथुतरजठरं हस्तपद्मैर्दधानम्
दन्तं पाशाङ्कुशे चाप्य थ करविलसद्बीजपूरं मनोज्ञम् ।
बालेन्दुद्योति मौलिंकरिपतिवदनं दानपूरार्द्रगण्डम्
भोगीन्द्राबद्धभूषं भवभयमथनं चिन्तये श्रीगणेशम् ॥''

(एवं ध्यात्वा नवकुसुमं मूर्ध्नि विन्यस्य पाद्यार्घ्याचमनीय स्नानोक्त द्रव्योदकैरभिषिच्य वस्त्रादिभिरलङ्कृत्य सम्पूजयेत्।)

गणेशस्य दक्षिणे-ओं श्रीं सिद्धिलक्ष्म्यै नमः । वामे-ओं ह्रीं वल्लभायै नमः । इत्यभ्यर्च्य आवरणपूजां कुर्यात् । ओं गों ईशानमूर्ध्ने नमः । ओं गें तत्पुरुषवक्त्राय नमः । ओं गूं अघोरहृदयाय नमः । ओं गीं वामदेवगुह्याय नमः । ओं गां सद्योजातपादाभ्यां नमः । ओं गां हृदयाय नमः । ओं गीं शिरसे नमः । ओं गूं शिखायै नमः । ओं गैं कवचाय नमः । ओं गौं नेत्रत्रयाय नमः । ओं गः अस्त्राय नमः । प्रथमावरणपूजां समर्पयामि ।

पूर्वादिचतुर्दिक्षु क्रमेण - ओं हां विघ्नेश्वराय नमः । ओं हां महाकर्णाय नमः । ओं हां गजवक्त्राय नमः । ओं हां महोदराय नमः । आग्नेयादिविदिक्षु क्रमेण - ओं हां एकदन्ताय नमः । ओं हां महाकायाय नमः । ओं हां विघ्नेशाय नमः । ओं हां गणाधिपाय नमः । द्वितीयावरणपूजां समर्पयामि ।

(पूर्वस्यां) ओं बालगणपतये नमः । ओं भक्तगणपतये नमः । (दक्षिणस्यां) ओं वीरगणपतये नमः । ओं शक्तिगणपतये नमः । (पश्चिमायां) ओं सिद्धिगणपतये नमः । ओं पिङ्गलगणपतये नमः । (उत्तरस्यां) ओं उच्छिष्टगणपतये नमः । ओं रक्तगणपतये नमः । (आग्नेय्यां) ओं क्षिप्रगणपतये नमः । ओं हेरम्बगणपतये नमः । (नैरृत्यां) ओं लक्ष्मीगणपतये नमः । ओं विजयगणपतये नमः । (वायव्यां) ओं नृत्तगणपतये नमः । ओं ऊर्ध्वगणपतये नमः । (ऐशान्यां) ओं महागणपतये नमः । ओं हरिद्रागणपतये नमः । तृतीयावरणपूजां समर्पयामि ।

(आग्नेय्यां) सन्तानतरुमूले ओं सरस्वतीसमेताय ब्रह्मणे नमः । (नैरृत्यां) मन्दारतरुमूले ओं लक्ष्मीसमेताय विष्णवे नमः । (वायव्यां) कल्पतरुमूले ओं भवानीसमेताय महेश्वराय नमः । (ऐशान्यां) चन्दनतरुमूले ओं रतिसमेताय कामदेवाय नमः । चतुर्थावरणपूजां समर्पयामि ।

(पूर्वाद्यष्टदिक्षु क्रमेण) ओं वज्रायुधायेन्द्राय नमः । ओं शक्त्यायुधायाग्नये नमः । ओं दण्डहस्ताय यमाय नमः । ओं खड्गहस्ताय निरृतये नमः । ओं पाशहस्ताय वरुणाय नमः । ओं अङ्कुशधारिणे वायवे नमः । ओं गदाधराय सोमाय नमः । ओं त्रिशूलपाणये ईशानाय नमः । ऊर्ध्वे - ओं पद्मसहिताय ब्रह्मणे नमः । अधः - ओं चक्रहस्ताय विष्णवे नमः । पञ्चमावरणपूजां समर्पयामि ।

(अथा ष्टोत्तरशतनामभिः सहस्रनामभिश्च सम्पूज्य धूपदीपौ दत्वा नारिकेल रम्भाफलादि नानाफलानि नानाविधान्नमोदकलड्डुकापूपादीन् निवेद्य नीराजनादि सर्वोपचारान् कृत्वा द्वारपालमूषकादीनां अष्टदिग्देवतानाञ्च बलिं दत्वा महाबलिपीठे) ओं सर्वविघ्नगणरूपाय नमः । (इत्यभ्यर्च्य) ओं सर्वविघ्नगणरूपेभ्यस्स्वाहा । (इति बलिं दत्वा । अग्रे-निरोधार्घ्यं दत्वा सर्वोपचारान् कृत्वा)

"वक्रतुण्ड महाकाय सूर्यकोटिसमप्रभ।
अविघ्नं कुरु मे देव पूजाकार्येषु सर्वदा॥" इति सम्प्रार्थयेत्॥

## द्वादशावरण पूजा

आचम्य प्राणानायम्य देशकालौ संकीर्त्य श्रीगणेशदेवताप्रसादार्थं द्वादशावरणपूजां करिष्ये। ॐ गणनाथाय नमः। ॐ हेरम्बाय नमः। ॐ इभवक्त्राय नमः। ॐ मूषकवाहनाय नमः। ॐ शिवप्रियाय नमः। ॐ उमापुत्राय नमः। ॐ प्रथमावरणपूजां समर्पयामि।

ॐ वरगणपतये नमः। ॐ सुरगणपतये नमः। ॐ चण्डगणपतये नमः। ॐ इभवक्त्रगणपतये नमः। ॐ क्षिप्रगणपतये नमः। ॐ प्रसादगणपतये नमः। ॐ लम्बोदरगणपतये नमः। ॐ द्वितीयावरणपूजां समर्पयामि।

ॐ इन्द्राय नमः। ॐ अग्नये नमः। ॐ यमाय नमः। ॐ निर्ऋतये नमः। ॐ वरुणाय नमः। ॐ वायवे नमः। ॐ सोमाय नमः। ॐ ईशानाय नमः। ॐ तृतीया वरणपूजां समर्पयामि।

ॐ विनायकाय नमः। ॐ द्वैमातुराय नमः। ॐ विघ्नराजाय नमः। ओं ॐ गणाधिपाय नमः। ॐ हेरम्बाय नमः। ॐ एकदन्ताय नमः। ॐ लम्बोदराय नमः। ॐ चतुर्थावरणपूजां समर्पयामि।

ॐ तीक्ष्णदंष्ट्राय नमः। ॐ सूतरूपाय नमः। ॐ गजास्याय नमः। ॐ त्रिनेत्राय नमः। ॐ रक्तप्रियाय नमः। ॐ बृहदुदराय नमः। ॐ सुरवंद्याय नमः। ॐ शिवसुताय नमः। ॐ पंचमावरणपूजां समर्पयामि।

ॐ भद्रकालिने नमः। ॐ भैरवाय नमः। ॐ शेषाय नमः। ॐ वरुणाय नमः। ॐ वरेण्याय नमः। ॐ सतां पतये नमः। ॐ संवत्सराय नमः। ॐ शान्ताय नमः। ॐ षष्ठावरणपूजां समर्पयामि।

ॐ सरस्वत्यै नमः। ॐ लक्ष्म्यै नमः। ॐ भारत्यै नमः। ॐ ब्रह्मणे नमः। ॐ विष्णवे नमः। ॐ रुद्राय नमः। ॐ आकाशाय नमः। ॐ वेदाय नमः। ॐ वास्तुपुरुषाय नमः। ॐ सप्तमावरणपूजां समर्पयामि।

ॐ वक्रतुण्डविनायकाय नमः । ॐ एकदन्तविनायकाय नमः । ॐ त्रिमुखविनायकाय नमः । ॐ पंचास्यविनायकाय नमः । ॐ हेरम्बविनायकाय नमः । ॐ विघ्नराजविनायकाय नमः । ॐ वरदविनायकाय नमः । ॐ मोदकविनायकाय नमः । ॐ सिद्धिविनायकाय नमः । ॐ अष्टमावरणपूजां समर्पयामि ।

ॐ अभयविनायकाय नमः । ॐ सिंहतुण्डविनायाकाय नमः । ॐ कुपिताक्षविनायकाय नमः । ॐ दण्डहस्तविनायकाय नमः । ॐ पिचुण्डि(चण्ड)विनायकाय नमः । ॐ उद्दंडतुण्डविनायकाय नमः । नवमावरणपूजां समर्पयामि ।

ॐ स्थूलदन्तविनायकाय नमः । ॐ कालप्रियविनायकाय नमः । ॐ चतुर्मुखविनायकाय नमः । ॐ द्वे(भे)रुण्डविनायकाय नमः । ॐ ज्येष्ठविनायकाय नमः । ॐ कलाविनायकाय नमः । ॐ नागेशविनायकाय नमः । ॐ सृष्टिविनायकाय नमः । दशमावरणपूजां समर्पयामि ।

ॐ मणिकर्णविनायकाय नमः । ॐ आशाविनायकाय नमः । ॐ सृष्टिविनायकाय नमः । ॐ यक्षविनायकाय नमः । ॐ गजकर्णविनायकाय नमः । ॐ चित्रघण्टविनायकाय नमः । ॐ स्थूलजंघविनायकाय नमः । ॐ मंगलविनायकाय नमः । एकादशावरणपूजां समर्पयामि ।

ॐ मोदकविनायकाय नमः । ॐ प्रमोदकविनायकाय नमः । ॐ आमोदकविनायकाय नमः । ॐ सुमुखविनायकाय नमः । ॐ दुर्मुखविनायकाय नमः । ॐ ज्ञानविनायकाय नमः । ॐ द्वारविनायकाय नमः । ॐ विमुक्तविनायकाय नमः । द्वादशावरणपूजां समर्पयामि ।

## गोमयगणपतिविधानम्

अथ सङ्कटनाशककार्यसिद्धिदगणपतिप्रयोगः । आचम्येत्यादि श्रीपरमेश्वरप्रीत्यर्थं मम त्वरित द्रव्यप्राप्त्यर्थं गोमयगणपतिपूजां करिष्ये । तदङ्गं प्राणप्रतिष्ठां करिष्ये । इति सङ्कल्प्य गोमयगणपतिं कृत्वा हस्ते धृत्वा ॐ

आं ह्रीं क्रों अं यं रं लं वं शं षं सं हं ळं क्षं हंसः सोऽहम्। अस्यां गोमयगणपतिमूर्तौ प्राणा इह प्राणाः। ॐ आं ह्रीं क्रों... अस्यां गोमयमूर्तौ जीव इहस्थितः। आं ह्रीं क्रों ... अस्यां गोमयगणपतिमूर्तौ सर्वेन्द्रियाणि वाङ्मनस्त्वक्चक्षुः श्रोत्रजिह्वाघ्राण पाणिपाद पायूपस्थाख्यानि सुखं चिरं तिष्ठन्तु स्वाहा। अस्य देवस्य गर्भाधानादि पञ्चदशसंस्कारसिद्ध्यर्थं पञ्चदशप्रणवावृत्तीः करिष्ये। ॐ इति पञ्चदशवारं जप्त्वा देवाय -

ॐ नमो वक्रतुण्डाय इति मन्त्रेण नैवेद्यं समर्पयेत्। ततः न्यासं कुर्यात् ॐ नमो वक्रतुण्डाय अङ्गुष्ठाभ्यां नमः। ॐ नमो वक्रतुण्डाय तर्जनीभ्यां नमः। ॐ नमो वक्रतुण्डाय मध्यमाभ्यां नमः। ॐ नमो वक्रतुण्डाय अनामिकाभ्यां नमः। ॐ नमो वक्रतुण्डाय कनिष्ठिकाभ्यां नमः। ॐ नमो वक्रतुण्डाय करतलकरपृष्ठाभ्यां नमः। ततः हृदयादिषडङ्गन्यासः

ॐ नमो वक्रतुण्डाय हृदयाय नमः। ॐ नमो वक्रतुण्डाय शिरसे स्वाहा। ॐ नमो वक्रतुण्डाय शिखायै वषट्। ओं नमो वक्रतुण्डाय कवचाय हुं। ओं नमो वक्रतुण्डाय नेत्रत्रयाय वौषट्। ॐ नमो वक्रतुण्डाय अस्त्राय फट्। इति।

अथ ध्यानं - प्रसन्नवदनं ध्यायेत्सर्वविघ्नोप शान्तये। अभीप्सितार्थ सिद्ध्यर्थं पूजितो यः सुरासुरैः॥ इति ध्यात्वा नत्वा नाममन्त्रेण पूजां कुर्यात्। यथा - ॐ नमो वक्रतुण्डाय आवाहयामि। ॐ नमो वक्रतुण्डाय आसनं समर्पयामि। ॐ नमो वक्रतुण्डाय पाद्यं समर्पयामि। ॐ नमो वक्रतुण्डाय अर्घ्यं समर्पयामि ॐ नमो वक्रतुण्डाय आचमनीयं समर्पयामि। ॐ नमो वक्रतुण्डाय स्नानं समर्पयामि। ॐ नमो वक्रतुण्डाय गन्धान्धारयामि। ॐ नमो वक्रतुण्डाय सिन्दूरं समर्पयामि। ॐ नमो वक्रतुण्डाय आभरणानि समर्पयामि। ॐ नमो वक्रतुण्डाय पुष्पाणि समर्पयामि। ॐ नमो वक्रतुण्डाय धूपं समर्पयामि। ॐ नमो वक्रतुण्डाय दीपं समर्पयामि। ॐ नमो वक्रतुण्डाय नारिकेल खण्डं कदलीफलं समर्पयामि। ॐ नमो वक्रतुण्डाय खण्डशर्करां समर्पयामि। ॐ नमो वक्रतुण्डाय ताम्बूलं समर्पयामि। ॐ नमो वक्रतुण्डाय दूर्वाङ्कुरान्

समर्पयामि। ॐ नमो वक्रतुण्डाय मन्त्रपुष्पं समर्पयामि। ॐ नमो वक्रतुण्डाय नमस्करोमि। एवं षोडशोपचारपूजां कृत्वा "ॐ नमो वक्रतुण्डाय" इत्य मन्त्रस्य विशिष्टकामना सिद्ध्यै १००८ जपः कार्यः। (१०८ वारं वा) जपोत्तरं षडङ्गन्यासं कृत्वा देवाय जपं निवेद्य नत्वा अनेन कर्मणा भगवान् गोमयगणपतिः वक्रतुण्डः प्रीयताम्। "ॐ नमो वक्रतुण्डाय विसर्जयामि" इति मन्त्रेण विसर्जनं कुर्यात्। एवं एकविंशतिदिनपर्यन्तमनु तिष्ठेत्। मूर्तेः जलादौ विसर्गः। प्रत्यहं नूतनां मूर्तिं कुर्यात्। अनेन त्वरितकार्यसिद्धिः द्रव्यलाभश्च।

## विनायक व्रतेषु मण्डलानि

### गणपतिभद्रम् (१७ रेखात्मकम्)

अथातः संप्रवक्ष्यामि मण्डलं सर्वसिद्धिदम्।
नाम्ना च विघ्नमर्दाख्यं विनायकव्रते हितम्॥ १॥
तिर्यगूर्ध्वं सप्तदशरेखाः कार्याः सुशोभनाः।
खण्डेन्दुस्त्रिपदः कोणे शृंखला च चतुष्पदैः॥ २॥
कार्या नवपदा वल्ली भद्रं रक्तं चतुष्पदम्।
ततो विंशतिकोष्ठेषु कार्यो गणपतिः शुभः॥ ३॥
कोष्ठद्वयेन मुकुटं गणेशस्य च कारयेत्।
पीतश्च परिधिः कार्यः पदैर्विंशतिभिस्तदा॥ ४॥
मध्ये षोडशकोष्ठैश्च पद्मं कार्यं सुशोभनम्।
सर्वतोभद्रदेवान्वै विशेषेणात्र योजयेत्॥ ५॥

### गणेशभद्रम् (३० रेखात्मकं)

तिर्यगूर्ध्वगता रेखाः कार्यास्त्रिंशत् ऋजुश्शुभाः।
कोणेन्दुखण्डस्त्रिपदैः श्वेतेन नवशृंखला॥ १॥

एकोनविंशद्वल्ली च कृष्णनीलेन पूरयेत्।
भद्रं चतुष्पदैश्चैव रक्तेनैकपदं त्यजेत्॥ २॥

तत्पदं च पदादूर्ध्वं त्रित्रिकेषु पदेषु च।
कोणे कोणान्तराले च सितं तदधश्च वै॥ ३॥

तिर्यगस्याधोऽधस्तिर्यगेवं द्वादशके पदे।
रक्तवर्णेन संपूर्य तत्रस्थस्तु गजाननः॥ ४॥

पदमेकं पदं हित्वोर्ध्वं द्वितीयो गजाननः।
एवं चतुः प्रतिदिशं संख्या चैव च षोडश॥ ५॥

गणेशाद्यद्वयोर्मध्ये ऊर्ध्वं पंचसु वापिका।
द्वित्रयोर्मध्यभागे तु लिङ्गं कृष्णाष्टकं ततः॥ ६॥

वल्लीवापीद्वयोः पार्श्वे द्वयं लिङ्गं तु पूर्ववत्।
तयोर्मध्ये गणेशस्य रक्तवर्णैश्चतुर्दिशम्॥ ७॥

तदूर्ध्वं परिधिः कार्यः द्वात्रिंशत्पीतवर्णकः।
मध्ये एकोनपंचाशत्पदे महागजाननः॥ ८॥

पदानि त्ववशेषाणि सत्वेन च प्रपूरयेत्।
एकविंशतिगाणेशं मण्डलं तद्व्रतस्य च॥ ९॥

## गणेशभद्रदेवतास्थापनमन्त्राः ऋग्वेदीयाः

मध्ये ४९ पदेषु ॐ गणानां त्वा ... सादनम्। ॐ भूर्भुवः स्वः ब्रह्मणस्पतये नमः। ब्रह्मणस्पतिं आवाहयामि। एवं सर्वत्र। चतुर्द्वारे पूर्वादिक्रमेण (पूर्व - दक्षिण - प.श्चिम - उत्तर) ॐ देवाश्चित्ते ... मसि। ॐ भू... सुमुखाय... दक्षिणद्वारे ॐ आतून इन्द्र.... दक्षिणेन। ॐ भू.... एकदन्ताय ...। पश्चिमद्वारे ॐ उत्तिष्ठ ब्रह्मणस्पते .... भवासचा। ॐ भू... कपिलाय ...। उत्तरद्वारे ॐ सेमाम विड्ढि... मतिम्। ॐ भू... गजकर्णाय...। पूर्वे चतुर्मुखा उदक्संस्थाः ॐ आविबाध्या ... स्वर्विदम्। ॐ भू... लंबोदराय ...। ॐ

विश्राहित्वा... मवोभिः । ॐ भू... विकटाय... । ॐ त्वामिद्धिसह... आचके । ॐ भू... विघ्ननाशनाय ... । ॐ योनन्त्वा.. पर्वतम् । ॐ भू... गणाधिपाय.... । दक्षिणे पूर्वसंस्थाः ।ॐ सुनीतिभि... महित्वनम् । ॐ भू...धूम्रकेतवे.... । ॐ न हित्वा शूरदेवा ... यन्ते । ॐ भू... गणाध्यक्षाय... । ॐ प्रैतु ब्रह्मणस्पति... नयन्तु नः । ॐ भू... भालचन्द्राय... । ॐ तद्देवानां देव... व्यचक्षयत्स्वः । ॐ भू... गजाननाय...।

पश्चिमे उदक्संस्थाः - न तमंहोन दू... रक्षसि ब्रह्मणस्पते । ॐ भू... वक्रतुण्डाय ... । ॐ यो वाघते ददाति... अनेहसम् । ॐ भू... गणपाय...। ॐ सोमानं स्वारणं... औशिजः ॐ भू... विघ्नराजाय.... । ॐ व्रातं व्रातं गणं... विदथेषु धीराः । ॐ भू... विनायकाय.... । उत्तरे पूर्वसंस्थाः ॐ यो रेवान्ये ... यस्तुरः । ओं भू ... गणपतये... । प्रनूनं ब्रह्मणस्पति... चक्रिरे । ॐ भू... गणनाथाय... । ॐ आनोभर... वसोर्निर्माक् । ॐ भू... हेरम्बाय... । ॐ सद्योजुवस्ते... जरन्ते । ॐ भू... धरणीधराय... ।

ईशानपूर्वान्तराले पंचकोष्ठात्मकवाप्याम् ॐ इन्द्रं विश्वा... सत्पतिं पतिम् । ॐ भू... इन्द्राय... । पूर्वाग्नेयान्तराले वाप्याम् ॐ अग्निं दूतं वृणीमहे... सुक्रतुम् । ॐ भू... अग्नये नमः... ।

अग्नियमान्तराले वाप्यां ॐ यमाय सोमं... अरंकृतः । ॐ भू... यमाय ... । यमनिर्ऋत्यान्तराले वाप्यां ॐ मोषुण परापरा... तृष्णया सहा । ॐ भू... निर्ऋतये... । निर्ऋतिवरुणान्तराले वाप्यां ॐ त्वन्नो अग्ने वरुणस्य ... प्रमुमुग्ध्यस्मत् । ॐ भू... वरुणाय... । वरुणवायव्यान्तराले वाप्याम् । वायो एते सहस्रिणो ... ॐ भू... वायवे... । वायुसोमान्तराले वाप्याम् ॐ वयं सोमव्रते... सचेमहि । ॐ भू... सोमाय ... ।

सोमेशानान्तराले वाप्याम् । ॐ तमीशानं... स्वस्तये । ॐ भू... ईशानाय... । आग्नेयकोणेन्दुखण्डे ॐ विष्णोर्नु कं ... स्त्रेधो रुगायः । ॐ भू... विष्णवे... । निर्ऋतिकोणेन्दुखण्डे... ॐ त्र्यम्बकं...यमामृतात् ।

ॐ भू...रुद्राय... । वायव्यकोणेन्दुखण्डे... ॐ अश्विनावर्ति... नियच्छतम् । ॐ भू...अश्विभ्यां... । ईशानकोणेन्दुखण्डे.... ॐ कदा वसो... वाताप्याय । ॐ भू... कंदर्पाय... । ईशानपूर्वान्तराले भद्रे । ॐ येन सपत्ना ... राजमक्रन् । ॐ भू... अष्टवसुभ्यो... । इन्द्राग्न्यन्तराले भद्रे । ॐ इमारुद्राय... न्ननातुरम् । ॐ भू... रुद्राय... । अग्नियमान्तराले भद्रे । ॐ सत्येनोत्त... अधिश्रितः । ॐ भू...सूर्यासावित्र्यै... । यमनि ऋत्यन्तराले भद्रे । ॐ अश्विना पिबतंमधु... । ॐ भू... अश्विभ्यां... । निर्ऋतिवरुणान्तराले भद्रे । ॐ विश्वेदेवाः शास्तन... वहानि । ॐ भू... विश्वेभ्यो देवेभ्यो.... । वरुणवायव्यान्तराले भद्रे । ॐ उदीरतामवर... हवेषु । ॐ भू... पितृभ्यो.... । वायुसोमान्तराले भद्रे । ॐ आयङ्गौः पृश्निः....प्रयन्स्वः । ॐ भू...सर्पेभ्यो... । सोमेशान्तराले भद्रे । ॐ यदक्रन्दः.... अर्वन् । ॐ भू... स्कन्दाय... । ब्रह्मणस्पतीशानमध्ये शृंखलायाम् । ॐ ऋषभं मा... गोपतिं गवाम् । ॐ भू... ऋषभाय... । तत्रैव वामवल्लयाम् । ॐ विष्णोर्नुकं... त्रेधोरुगायः । ॐ भू...नारायणाय... । तत्रैवदक्षिणवल्ल्याम् । ॐ भू... अदिति... अमृतबन्धवः । ॐ भू... दक्षाय... । ब्रह्मणस्पत्यग्निमध्ये शृंखलायाम् । ॐ जातवेदसे.... दुरितात्यग्निः । ॐ भू... दुर्गायै... । तत्र वामवल्ल्याम् ॐ उदीरता... हवेषु । ॐ भू... स्वधायै.... । तत्रैव दक्षिणवल्ल्याम् । ॐ त्र्यम्बकं यजामहे... मृतात् । ॐ भू... रुद्राय...। ब्रह्मणस्पति निर्ऋतिमध्ये शृंखलायाम् । ॐ पुनर्दाय... मुपासते । ॐ भू... रोगेभ्यो ... । तत्रैव वामवल्ल्याम् । ॐ समुद्रादूर्मि...नाभिः । ॐ भू... समुद्राय... । तत्रैव दक्षिणवल्ल्याम् । सितासिते सरिते... भजन्ते । ॐ भू... सरिद्भ्यो... ब्रह्मणस्पतिः वायुमध्ये शृङ्खलायां । ओं मरुतो .. यस्य तमोजनः । ओं मरुद्भयो नमः । तत्रैव वामवल्ल्याम् । ॐ आतून इन्द्र... दक्षिणेन । ॐ भू...गणेशाय... । तत्रैव दक्षिणवल्ल्याम् । ॐ स्योना पृथिवी... सप्रथः । ॐ भू... भूम्यै.. । पूर्वे त्रयलिंगे ॐ रुद्राय नमः । ॐ अजैकपदे नमः... । ॐ अहिर्बुध्न्याय नमः... । एवं सर्वत्र त्रिषु लिंगेषु । ॐ विरूपाक्षाय

नमः... । ॐ रैवताय नमः । ॐ हराय नमः । पश्चिमे त्रयलिंगे ॐ विरूपाय नमः । ओं त्र्यम्बकाय नमः । ॐ सुरेश्वराय नमः । उत्तरे लिंगमये - ॐ मृत्यवे नमः । ॐ अन्तकाय नमः । ॐ सर्वभूतक्षयाय नमः । पीतपरिधौ पूर्वादिक्रमेण । ॐ वज्राय नमः । ॐ शक्तये नमः । ॐ दण्डाय नमः । ॐ खड्गाय नमः । ॐ पाशाय नमः । ॐ अंकुशाय नमः । ॐ गदायै नमः । ॐ त्रिशूलाय नमः । सत्वपरिधौ - कश्यपादिसप्तर्षयः अरुन्धती च । पूर्वादिक्रमेण - तद्बहिः पीतपरिधौ - नवग्रहाः । तद्बहिः कृष्णपरिधौ - ऐन्द्री, कौमारी, ब्राह्मी, वाराही, चामुण्डा, वैष्णवी, माहेश्वरी, वैनायकी पूर्वादिक्रमेण - मातरः ।

## सर्वतोभद्रम् ।

प्रागुदीच्यायतारेखाः कुर्यादेकोनविंशतिम्।
खण्डेन्दुस्त्रिपदः कोणे शृङ्खला पंचभिः पदैः ॥ १ ॥
एकादशपदा वल्ली भद्रं नवभिः पदैः ।
चतुर्विंशत्पदा वापी परिधिः पीतवर्णकैः ॥ २ ॥
मध्ये षोडशभिः कोष्ठैः पद्ममष्टदलं स्मृतम्।
श्वेतेन्दुः शृंखला कृष्णा वल्लीं नीलेन पूरयेत् ॥ ३ ॥
भद्रारुणा सिता वापी परिधिः पीतवर्णकैः ।
बाह्योत्तरदलैः श्वेता कर्णिका पीतवर्णका ॥ ४ ॥
परिध्या वेष्टितं पद्मं बाह्ये सत्वं रजस्तमः ।
तन्मध्ये स्थापयेद्देवान्ब्रह्माद्यांश्च सुरेश्वरान् ॥ ५ ॥

## सर्वतोभद्रदेवतास्थपनं विधानं च ।

आचम्य प्राणानायम्य देशकालौ संकीर्त्य । संकल्पः अमुक कर्माङ्गत्वेन सर्वतोभद्रमण्डलदेवतास्थापनं पूजनं चाहं करिष्ये (१) मध्ये कर्णिकायां ॐ ब्रह्मजज्ञानं...श्च विवः । ब्रह्माणं आवाहयामि स्थापयामि इति ब्रह्माणं स्थापयेत् । एवं सर्वत्र । ततः उदीचीमारभ्य वायुकोणपर्यन्तं कुबेरादीन्वायु

पर्यन्तानष्टौ लोकपालान्स्थापयेत् (२) उत्तरे। वाप्यां ॐ वयं सो मव्रते... सचेमहि। सोमाय नमः सोमं आवा...। ॐ (३) ईशान्यां खण्डेन्दौ तमीशानं जगत... स्वस्तये। ईशानाय नमः ईशानं आवा.. (४)। ॐ पूर्वे वाप्यां त्रातारमिन्द्र... धात्विन्द्रः। इन्द्राय नमः इन्द्रं... (५) आग्नेय्यां खण्डेन्दौ ॐ त्वं नो अग्ने... रक्षमाणस्तवव्रते। अग्नये नमः अग्निं.... (६) दक्षिणे वाप्यां। ॐ यमायत्वा... धर्मः पित्रे। यमाय नमः यमं ... (७) नैर्ऋत्यां खण्डेन्दौ - ॐ असुन्वन्तमयज...तुभ्यमस्तु। निर्ऋतये नमः निर्ऋतिं... (८) पश्चिमे वाप्यां। ॐ तत्वायामि ब्रह्मणा... प्रमोषीः। वरुणाय नमः वरुणं.. (९) वायव्यां खण्डेन्दौ ॐ आनोनियुद्भिः... सदानः। वायवे नमः वायुं ... (१०) वायुसोम मध्ये। ॐ सुगावो देवा... वसूनि। अष्टवसुभ्यो नमः अष्टवसून्... (११) सोमेशानयोर्मध्ये -। ॐ रुद्राः सं सृज्य...रोचते एकादशरुद्रेभ्यो नमः एकादशरुद्रान् आवाहयामि। (उदकोपस्पर्शः)। (१२) ईशानेन्द्रमध्ये ॐ यज्ञोदेवानां... दित्येभ्यस्त्वा। द्वादशादित्येभ्यो नमः - (१३) इन्द्राग्निमध्ये भद्रे यावांकशामि मिक्षतम्। अश्विभ्यां नमः अश्विनावावाहयामि। (१४) अग्नियममध्ये भद्रे - ओमासश्च ... दाशुषः सुतम्। विश्वेभ्यो देवेभ्यो नमः। विश्वान् देवान् आवाहयामि। (१५) यमनिर्ऋतिमध्ये भद्रे। ॐ अभित्यं देव... कृपास्वः। यक्षेभ्यो नमः यक्षानावाहयामि (१६) निर्ऋतिवरुणमध्ये भद्रे। ॐ नमोऽस्तुसर्पेभ्यो... सर्पेभ्यो नमः। सर्पेभ्यो नमः सर्पानावाहयामि तत्रैव (१७) ॐ भूतेभ्यो नमः - भूतानावाहयामि। (१८) वरुणवायुमध्ये भद्रे - ॐ ऋताषाडृ... वाट् ताभ्यः। गन्धर्वाप्सरोभ्यो नमः गन्धर्वाप्सरस आवाहयामि। (१९) ब्रह्मसोममध्ये वाप्यां ॐ यदक्रन्द... जातन्ते अर्वन्। स्कन्दाय नमः स्कन्दमावाहयामि। तत्रैव नाममन्त्रेण (२०) ॐ नन्दिने नमः नन्दिनमावाहयामि। (२१) ॐ ईश्वराय नमः ईश्वरमावाहयामि। (२२) ॐ शूलाय नमः शूलमावाहयामि (२३) ॐ महाकालाय नमः महाकालमावाहयामि। (२४) ब्रह्मेशानमध्ये वल्लिषु ॐ अदि सियौं...

जनित्वम्। दक्षादिसप्तकाय नमः दक्षादिसप्तकमा। (२५) ब्रह्मेन्द्रमध्ये वाप्याम् अम्बे अम्बिके... पीलवासिनीम्। दुर्गायै नमः दुर्गामा। (२६) तत्रैव। ॐ इदं विष्णुर्व्विचक्रमे... सुरे। विष्णवे नमः। विष्णुमावाहयामि। (२७) ब्रह्माग्निमध्ये वल्लिषु। ॐ पितृभ्यः स्वधायिभ्यः... शुन्धध्वम्। स्वधायै नमः स्वधामावाहयामि। (२८) ब्रह्मयममध्ये वाप्याम्। ओं परं मृत्यो.. तवीरान्। मृत्यवे नमः मृत्युमावाहयामि। (२९) ब्रह्मनिर्ऋतिमध्ये। ॐ गणानांत्वा... गर्भधम्। गणपतये नमः गणपतिमावाहयामि। (३०) ब्रह्मवरुणमध्ये वाप्याम्। ॐ शं नो देवी... भवन्तुनः। अद्भ्यो नमः अपः आवाहयामि। (३१) ब्रह्मवायुमध्ये वल्लीषु। ॐ मरुतो यस्य... मो जनः। मरुद्भ्यो नमः मरुत आवा... (३२) ब्रह्मणः पादमूले कर्णिकाधः। ॐ स्योना पृथिवि नो... सप्रथाः। पृथिव्यै नमः पृथ्वीमावा... (३३) तत्रैव - ॐ पञ्चनद्यः सरस्वती... भवत्सरित्। गङ्गादिनदीभ्यो नमः गङ्गादिनदीरावाहयामि। (३४) तत्रैव ॐ इमं मे... राचके। सप्तसागरेभ्यो नमः सप्तसागरानावा...। (३५) ततो नाम्ना कर्णिकोपरिमेरवे नमः मेरुमावाहयामि। (३६) बाह्यपरिधौ सोमासमीपे - गदायै नमः गदामावा....। (३७) ईशानान्तिके ॐ त्रिशूलाय नमः त्रिशूलमावाहयामि। (३८) इन्द्रान्तिके - ॐ वज्राय नमः वज्रमावाहयामि। (३९) अग्निसमीपे - ॐ शक्तये नमः शक्तिमवाहयामि। (४०) यमान्तिके ॐ दण्डाय नमः दण्डमावाहयामि। (४१) निर्ऋतिसमीपे - ॐ खड्गाय नमः खड्गमा वाहयामि (४२) वरुणान्तिके - ॐ पाशाय नमः पाशमावाहयामि। (४३) वायुसमीपे - ॐ अङ्कुशाय नमः अङ्कुशमावाहयामि। (४४) तद्बाह्योत्तरे ॐ गौतमाय नमः गौतममा वाहयामि। (४५) ईशान्ये - ॐ भरद्वाजाय नमः भरद्वाजमावाहयामि। (४६) पूर्वे ॐ विश्वामित्राय नमः विश्वामित्रमावाहयामि। (४७) आग्नेय्याम् - ॐ कश्यपाय नमः कश्यपमावाहयामि। (४८) दक्षिणे जमदग्नये नमः जमदग्निमावाहयामि। (४९) नैर्ऋत्याम् - ॐ वसिष्ठाय नमः वसिष्ठमावाहयामि। (५०) पश्चिमे - ॐ अत्रये नमः अत्रिमावाहयामि।

(५१) वायव्याम् - ॐ अरुन्धत्यै नमः - अरुन्धतीमा वाहयामि। (५२) तद्बाह्ये पूर्वे - ॐ ऐन्द्र्यै नमः ऐन्द्रीमावाहयामि। (५३) आग्नेय्याम् - ॐ कौमार्यै नमः कौमारीमावाहयामि। (५४) दक्षिणे - ॐ ब्राह्म्यै नमः ब्राह्मीमावाहयामि। (५५) नैर्ऋत्याम् - ॐ वाराह्यै नमः वाराहीमावाहयामि। (५६) पश्चिमे - ॐ चामुण्डायै नमः चामुण्डा मावाहयामि। (५७) वायव्याम् - ॐ वैष्णव्यै नमः वैष्णवीमावाहयामि। (५८) उत्तरे - ॐ कौबेर्यै नमः कौबेरीमावाहयामि। (५९) ईशान्याम् - ॐ वैनायक्यै नमः वैनायकी मावाहयामि। एवं सर्वतोभद्रदेवताः आवाह्य पूजनं कुर्यात्। तथा च बलिप्रदानं विधाय - प्रधानहोमान्ते तत्तन्मन्त्रै र्नाममन्त्रैर्वा प्रत्येकं दशदशतिलाहुतिभिः एकैकाज्याहुत्या वा जुहुयात्।

## मन्त्रविधानम्

### महागणपति महामन्त्रः अष्टाविंशत्यक्षरः

शुक्लांबरधरं विष्णुं शशिवर्णं चतुर्भुजम्।
प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये॥

प्राणायामः (वैदिकेन मन्त्रेण, मूलमन्त्रेण वा)

सङ्कल्पः - ममोपात्त समस्त दुरितक्षयद्वारा श्रीपरमेश्वर प्रीत्यर्थं श्रीमहागणपति प्रसाद सिद्ध्यर्थं श्रीमहागणपति महामन्त्रजपं करिष्ये॥ (अप उपस्पृश्य, गुरुपादुकया गुरुत्रयं नत्वा, भूतशुद्धिं आत्मप्राणप्रतिष्ठां भूतोत्सारणं च कृत्वा)

अस्य श्रीमहागणपति महामन्त्रस्य, गणक ऋषिः, निचृद्गायत्री छन्दः, महागणपतिर्देवता। ओं गं बीजं, स्वाहा शक्तिः। ग्लौं कीलकम्। श्री महागणपति प्रसाद सिद्ध्यर्थे जपे विनियोगः।

ओं गां। श्रीं गीं। ह्रीं गूं। क्लीं गैं। ग्लौं गौं। गं गः इति षड्भिः प्रणवादिभिः कर-हृदयादिन्यासौ। भूर्भुवस्सुवरों (दिग्बन्धः) ध्यानं-

बीजापूरगदेक्षु कार्मुकरुजा चक्राब्जपाशोत्पल-

ब्रीह्यग्रस्वविषाण रत्नकलशप्रोद्यत्करांभोरुहः ।
ध्येयो (पायाद्) वल्लभया सपद्मकरया श्लिष्टो ज्वलद्भूषया
विश्वोत्पत्तिविपत्तिसंस्थितिकरो विघ्नेश इष्टार्थदः ॥

लमित्यादिपञ्चपूजाः-

लं पृथिव्यात्मने महागणपतये गन्धं समर्पयामि ।
हं आकाशात्मने महागणपतये पुष्पाणि समर्पयामि ।
यं वाय्वात्मने महागणपतये धूपमाघ्रापयामि ।
रं अग्न्यात्मने महागणपतये दीपं दर्शयामि ।
वं अमृतात्मने महागणपतये अमृतोपहारं निवेदयामि ।
सं सर्वात्मने महागणपतये सर्वोपचार पूजाः (तांबूलं) समर्पयामि ।

मूलमन्त्रः- ओं श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वर वरद सर्वजनं मे वशमानय स्वाहा । (१०८ वारं जपः)

(उत्तराङ्गन्यासाः) हृदयादिन्यासः । भूर्भुवस्सुवरों (दिग्विमोकः) ध्यानं, लमित्यादि पञ्चपूजा ।

गुह्याति गुह्यगोप्ता त्वं गृहाणात्मकृतं जपम् ।
सिद्धिर्भवतु देवेश त्वत्प्रसादान्मयि स्थिरा ॥

(इति देवस्य हस्ते जपं समर्पयेत् ॥)

अत्र संप्रदाय भेदाः- १) गायत्री छन्दः । २) ग्लां बीजं, ग्लौं शक्तिः, ग्लूं कीलकं इति, गं बीजं, ह्रीं शक्तिः, इति च । ३) करन्यासे हृदयादिन्यासे च,

१) सर्वत्र ओं श्रीं ह्रीं क्लीं इति प्रणवचतुष्टययोगः- यथा ओं श्रीं ह्रीं क्लीं ओं गां अङ्गुष्ठाभ्यां नमः - हृदयाय नमः इति ।

२) ग्लां ग्लीं ग्लूं ग्लैं ग्लौं ग्लः इति षड्भिः ।

३) गां गीं गूं गैं गौं गः इति षड्भिः ।

४) ह्रां गां, ह्रीं गीं, ह्रूं गूं ह्रैं गैं, ह्रौं गौं, ह्रः गः इति षड्भिः

५) ओं श्रीं ह्रीं क्लीं ग्लौं गं इति षड्बीजयुतैः गां गीं गूं गैं गौं गः इति षड्भिः।

६) ध्यानश्लोके विघ्नेश इष्टार्थद इत्यत्र विघ्नो विशिष्टार्थदः, विघ्नेश्वरोऽभीष्टदः इति।

५) मूलमन्त्रे - ओं श्रीं ह्रीं क्लीं ग्लौं गं गणपते वरद वरद सर्वजनं मे वशमानय स्वाहा इति

६) लमित्यादि पूजाः प्रत्येकं त्रिवारं कर्तव्या इति। पञ्चपूजा इति व्यवस्थया सं सर्वात्मने सर्वोपचार पूजाः समर्पयामि। अथवा तांबूलं समर्पयामि इति न वदन्ति।

७) भिन्नो ध्यानश्लोको यथा-

हस्तीन्द्राननमिन्दुचूडमरुणच्छायं त्रिणेत्रं रसाद्
आश्लिष्टं प्रियया सपद्मकरया स्वाङ्कस्थया सन्ततम्।
बीजापूरगदाधनुस्त्रिशिखयुक् चक्राब्जपाशोत्पल-
व्रीह्यग्रस्वविषाणरत्नकलशान् हस्तैर्वहन्तं भजे। इति।
अस्मिन् श्लोके अब्जेति पदं पद्मपरं, क्वचित् शंखपरमपि।
यथाऽन्यस्मिन् ध्यानश्लोके-
ध्याये हृदब्जे शोणाङ्गं वामोत्सङ्गविभूषया।
सिद्धलक्ष्म्या समाश्लिष्टपार्श्वं अर्धेन्दुशेखरम्॥
वामाधः करतो दक्षाधः करान्तेषु च पुष्करे।
परिष्कृतं मातुलंगगदा पुण्ड्रेक्षुकार्मुकैः।
शूलेन शंखचक्राभ्यां पाशोत्पलयुगेन च।
शालिमञ्जरिकास्वीयदन्ताञ्चलमणीघटैः।
स्रवन्मदं च सानन्दं श्रीश्रीपत्यादिसंवृतम्।
अशेषविघ्न विध्वंसनिघ्नं विघ्नेश्वरं भजे॥ इति॥

## श्रीवक्रतुण्ड महागणपतिः

अस्य श्रीवक्रतुण्ड महागणपति महामन्त्रस्य, भार्गव ऋषिः अनुष्टुप् छन्दः। वक्रतुण्डमहागणपति देवता। (सर्वत्र आदौ प्रणवयोगः।)

वं बीजं यं शक्तिः हुं कीलकम्। श्रीवक्रतुण्ड महागणपति प्रसादसिद्ध्यर्थे जपे विनियोगः।

करन्यासः। ओं वं अङ्गुष्ठाभ्यां नमः। क्रं तर्जनीभ्यां नमः। तुं मध्यमाभ्यां नमः। डां(ण्डां) अनामिकाभ्यां नमः। यं कनिष्ठिकाभ्यां नमः। हुं करतलकरपृष्ठाभ्यां नमः। अङ्गन्यासः (हृदयादिन्यासः) वं हृदयाय नमः। क्रं शिरसे स्वाहा। तुं शिखायै वषट्। डां (ण्डां) कवचाय हुं। यं नेत्रत्रयाय वौषट्। हुं अस्त्राय वौषट्। भूर्भुवस्सुवरों (इति दिग्बन्धः)

ध्यानम् - उद्यद्दिनेश्वररुचिं निजपद्महस्तैः

पाशाङ्कुशाभयवरान् दधतं गजास्यम्।

रक्ताम्बरं सकलदुःखहरं गणेशं

वन्दे प्रसन्नमखिलाभरणाभिरामम्।

लमित्यादि पञ्चपूजा।

मूलमन्त्रः - ओं वक्रतुण्डाय हुं। (१०८ जपः)

हृदयादिन्यासः। भूर्भुवस्सुवरों (इति दिग्विमोकः।) ध्यानम्। लमित्यादि पञ्चपूजा। गुह्यातिगुह्येति समर्पणम्

संप्रदाय भेदः- १. हुं बीजं, वं शक्तिः; ब्रह्म बीजम् । ध्याने - स्वर्णवर्णं चतुर्बाहुं पाशाङ्कुशधरं प्रभुम्। वरदाभयहस्तं च विलसत्कर्णचामरम् ध्यायामि। आवरण पूजा।

पात्रासादनं कृत्वा ऋषि-छन्दोदेवता विनियोगकर हृदयादिन्यास पर्यन्तं कृत्वा) ओं वं नमः (भ्रूमध्ये)। ओं क्रं नमः (कण्ठे)। ओं तुं नमः (हृदये)। ओं डां नमः (नाभौ)। ओं यं नमः (लिङ्गे)। ओं हुं नमः (पादयोः)। इति वर्णन्यासं कुर्यत्। मण्डूकादि परतत्वान्त पीठदेवताभ्यो नमः। तीव्रादिपीठ शक्तिभ्यो नमः। ओं ह्रीं सर्वशक्तिकमलासनाय नमः। इति संपूज्य, पीठे यन्त्रं मूर्तिं वा निधाय। प्राणप्रतिष्ठां पाद्यादिपुष्पान्तान् उपचारांश्च कृत्वा)

ओं संविन्मयः परो देवः परामृततरसप्रियः।

अनुज्ञां देहि गणप परिवारार्चनाय मे॥

(इति प्रार्थ्य पुष्पाञ्ज लिं दद्यात्। षट्कोण केसरेषु आग्नेय्यादिचतुर्विदिक्षु मध्ये दिक्षुच) ओं वं नमः हृदयाय नमः। हृदयश्रीपादुकां पूजयामि तर्पयामि नमः। ओं क्रं नमः, शिरसे स्वाहा। शिरः श्रीपादुकां पूजयामि तर्पयामि नमः। ओं तुं नमः शिखायै वषट्। शिखाश्रीपादुकां पूजयामि तर्पयामि नमः। ओं डां नमः कवचाय हुं, कवचश्रीपादुकां पूजयामि तर्पयामि नमः। ओं यं नमः नेत्रत्रयाय वौषट्, नेत्रत्रयश्रीपादुकां पूजयामि तर्पयामि नमः। ओं हुं नमः अस्त्राय फट् अस्त्रश्रीपादुकां पूजयामि तर्पयामि नमः। मूलं - ओं अभीष्टसिद्धिं मे देहि शरणागत वत्सल। भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम्॥ (इति पुष्पाणि दत्वा, विशेषार्घ्यात् बिन्दुं निक्षिप्य,) प्रथमावरणदेवताः पूजितास्तर्पिताः सन्तु नमः इति प्रार्थयेत्।

(ततोऽष्टदले पूज्यपूजकयोर्मध्यं प्राचीतिक्रमेण प्राची क्रमेण गन्धाक्षतपुष्पाणि तर्जन्यङ्गुष्ठाभ्यां गृहीत्वा अष्टसु दिक्षु) ओं विद्यायै नमः, विद्याश्रीपादुकां पूजयामि तर्पयामि नमः। ओं विधात्र्यै नमः, विधात्री...। ओं भोगदायै नमः, भोगदा...। ओं विघ्नघातिन्यै नमः, विघ्नघातिनी...। ओं निधिप्रदीपायै नमः।, निधिप्रदीपा...। ओं पापघ्न्यै नमः, पापघ्नी...। ओं पुण्यायै नमः। पुण्याश्री...। ओं शशिप्रभायै नमः। शशिप्रभा..। (इति अष्टौ शक्तीः पूजयित्वा) अभीष्ट + द्वितीयावरणार्चनम्। (इति पुष्पाणि दत्वा विशेषार्घ्याद्बिन्दुं दत्वा) द्वितीयावरण देवताः पूजितास्तर्पिताः सन्तु नमः (इति प्रार्थयेत्)

(अष्टदलाग्रेषु) ओं वक्रतुण्डाय नमः, वक्रतुण्ड श्रीपादुकां पूजयामि तर्पयामि नमः। ओं एकदंष्ट्राय नमः, एकदंष्ट्रश्री ...। ओं महोदराय नमः, महोदर ...। ओं हस्तिमुखाय नमः, हस्तिमुख ...। ओं लम्बोदराय नमः, लंबोदर ...। ओं विकटाय नमः, विकट ...। ओं विघ्नराजाय नमः, विघ्नराज ...। ओं धूम्रवर्णाय नमः, धूम्रवर्ण ...। ओं (इति पुष्पाणि दत्वा) मूलं, अभीष्ट + तृतीयावरणार्च नम्। (इति विशेषार्घ्या द्बिन्दुं दत्वा) तृतीयावरण देवताः पूजिताः तर्पिताः सन्तु नमः (इति प्रार्थयेत्)

(भूपुरे पूर्वादिक्रमेण) ओं लं इन्द्राय नमः । ओं रं अग्नये नमः । ओं मं यमाय नमः । ओं क्षं निर् ऋतये नमः । ओं वं वरुणाय नमः । ओं यं वायवे नमः । ओं कुं कुबेराय नमः । (सं सोमाय नमः ।) ओं हं ईशानाय नमः । (पूर्वेशानयोर्मध्ये) ओं आं ब्रह्मणे नमः । (वरुणनैरृतयोर्मध्ये) ओं ह्रीं अनन्ताय नमः । (इति दश दिक्पालान्पुष्पैः पूजयित्वा) मूलं - अभीष्टसिद्धिं + तुरीयावरणार्चनम् । इति विशेषार्घ्याद्बिन्दुं दत्वा) तुरीयावरणदेवताः पूजिताः तर्पिताः सन्तु नमः (इति प्रार्थयेत् ।)

ओं वं वज्राय नमः । ओं शं शक्तये नमः, ओं दं दण्डाय नमः, ओं खं खड्गाय नमः, ओं पां पाशाय नमः । ओं अं अंकुशाय नमः । ओं गं गदायै नमः । ओं त्रिं त्रिशूलाय नमः । ओं पं पद्माय नमः । ओं चं चक्राय नमः । इति तत्तद्दिक्पालसमीपे आयुधानि पुष्पैः पूजयित्वा मूलं - अभीष्ट + पंञ्चमावरणार्चनम् । (इति विशेषार्घ्य बिन्दुं दत्वा) पञ्चमावरणदेवताः पूजितास्तर्पिताः सन्तु नमः (इति प्रार्थयेत्)

पुरश्चरणं - षड्लक्षजपः । मोदाकाद्यष्टद्रव्यैः दशांशहोमः, तद्दशांश तर्पणं मार्जनं ब्राह्मणभोजनं च कुर्यात् । प्रतिदिनं ४४४ वारं तर्पणं वा कुर्यात् ।

वक्रतुण्डषडक्षरमन्त्रः द्वितीयः ।

मेधोल्काय स्वाहा इति मन्त्रस्वरूपम् । ऋष्यादिकं पूर्ववत् । में, धों, ल्कां, यं, स्वां, हां इति करहृदयादिन्यासौ । ध्यानं - उद्यद्दिनेश्वरेति । अन्यत् पूर्ववत् ।

वक्रतुण्डमन्त्रः - एकत्रिंशदक्षरः तृतीयः ।

ऋषिच्छन्दो देवता न्यासः पूर्ववत् । रायस्पोषस्य ददिता । निधिदः । रत्नधातुमान् । रक्षोहणः । वलगहनः । वक्रतुण्डाय हुं इति षड्भिः करहृदयादि न्यासौ । ध्यानं - उद्यद्दिनेश्वरेति । मन्त्रस्तु - "रायस्पोषस्य ददिता निधिदो रत्नधातुमान् । रक्षो हणो वलगहनो वक्रतुण्डाय हुं" इति । अन्यत्पूर्ववत् ।

वल्लभेशोपनिषदि तु - रायस्पोषस्य दाता निधिदाता - अन्नदो (मतः) रक्षोहणो वलगहनो वक्रतुण्डायहुं इति । ध्यानं - (वल्लभेशोपनिषदि)।

क्षीरोदार्णवशायिनं कल्पद्रुमाधःस्थितं वरदं व्योमरूपिणम्। प्रचण्ड दण्डदोर्दण्डं वक्रतुण्डस्वरूपिणम् । पार्श्वाधःस्थित कामधेनुं शिवोमातनयं विभुम् । रुक्मांबरनिभाकाशं रक्तवर्णं चतुर्भुजम् । कपर्दिनं शिवं शान्तं भक्तानाम भयप्रदम् । उन्नतप्रपदाङ्गुष्ठं गूढगुल्फं सुपार्ष्णिकम् । पीनजंघं गूढजानुं स्थूलोरुं प्रोन्नमत्कटिम् । निम्ननाभिं कंबुकण्ठं लंबोष्ठं लंबनासिकम् । सिद्धिबुद्ध्यु भयाश्लिष्टं प्रसन्नवदनाम्बुजम् । ध्यायामि । इति ।

उच्छिष्टगणपतिमन्त्रः नवाक्षरः ।

अस्य श्री उच्छिष्टगणपतिनवार्ण महामन्त्रस्य, कङ्कोल ऋषिः, विराट् छन्दः, उच्छिष्टगणपतिर्देवता । सर्वकामावाप्तये जपे विनियोगः ।

हस्ति । पिशाचि । लिखे । स्वाहा । हस्तिपिशाचिलिखे । स्वाहा इति षड्भिः करहृदयादिन्यासौ । ध्यानं-चतुर्भुजं रक्ततनुं त्रिनेत्रं पाशाङ्कुशौ मोदकपात्रदन्तौ । करैर्दधानं सरसीरुहस्थं उन्मत्तमुच्छिष्टगणेशमीडे ॥

मूलमन्त्रः- ओं हस्तिपिशाचि लिखे स्वाहा ।

आवरण पूजा च - आसनपीठ शक्तिपूजादिकं वक्रतुण्डवत् । षट्कोणे षडङ्गानि, प्रथमावरणे । अष्टदले ब्राह्मयाद्या अष्टौ मातरो द्वितीयावरणे । अष्टदलाद्बहिः वक्रतुण्डाद्यष्टौ, प्राच्यैशान्योर्मध्ये गणपतिः पश्चिमा नैरृत्योर्मध्ये हस्तिदन्तश्च तृतीयावरणे । भूपुराद्बहिः दशदिक्पतयः चतुर्थावरणे । तदायुधानि पञ्चमावरणे । पूजान्ते फलं मोदकं गुडपायसं वा बलिं दद्यात् ।) ओं गं हं क्लौं ग्लौं उच्छिष्टगणेशाय महायक्षाय अयं बलिः (इति मन्त्रेण ।) लक्षजपः ।

उच्छिष्टगणपतिमन्त्रः - द्वादशाक्षरः

अस्य श्रीउच्छिष्टगणपतिमहामन्त्रस्य, मनुः ऋषिः, विराट्छन्दः । उच्छिष्टगणपतिर्देवता । गं बीजं स्वाहा शक्तिः, क्लीं कीलकं, सर्वकामावाप्तये जपे विनियोगः । ह्रीं, गं, हस्ति, पिशाचि, लिखे, स्वाहा, इति षड्भिः करहृदयादिन्यासौ ।

ध्यानं - चतुर्भुजं इत्यादि। अन्यत्पूर्ववत्।

उच्छिष्टगणपति मन्त्रः - एकोनविंशत्यक्षरः

अस्य श्री उच्छिष्टगणपति महामन्त्रस्य, कङ्को(हो)ल ऋषिः विराट् छन्दः । उच्छिष्टगणपतिर्देवता।

नमः, उच्छिष्टगणेशाय, हस्ति, पिशाचि, लिखे, स्वाहा इति षड्भिः करहृदयादिन्यासौ।

ध्यानं - चतुर्भुजमित्यादि । मूलमन्त्रः - ओं नमः उच्छिष्टगणेशाय हस्तिपिशाचि लिखे स्वाहा। अन्यत्पूर्ववत्।

उच्छिष्टगणपति मन्त्रः सप्तविंशत्यक्षरः

ब्रह्मा ऋषिः । गायत्री छन्दः । उच्छिष्टगणपतिर्देवता। क्रों बीजं, स्वाहा शक्तिः, अभीष्टसिद्धये जपे विनियोगः । ओं हस्तिमुखाय लम्बोदराय । उच्छिष्टाय महात्मने । क्रों । प्रीं । ह्रीं । उच्छिष्टाय स्वाहा । इति षड्भिः प्रणवाद्यैः करहृदयादिन्यासौ। ध्यानम् - ध्यायामि तं गणेशानं पाशाङ्कुशधनुः शरम्। सान्द्रसिन्दूररक्ताङ्गं नग्ननारीमुखातुरम्। नारीयोनिमुखास्वादलोलुपं काममोहितम्। स्ववामाङ्कस्थदाराणां गाढालिङ्गनतत्परम्। स्वपादपद्मभक्तानां अभीष्टफलदायकम्।

मूलमन्त्रः-हस्तिमुखाय लम्बोदराय उच्छिष्टाय महात्मने क्रों प्रीं ह्रीं उच्छिष्टाय स्वाहा। विद्यावश्यप्रधानो मन्त्रः।

उच्छिष्टगणपतिमन्त्रः- द्वात्रिंशदक्षरः

अस्य श्री उच्छिष्टगणपति महामन्त्रस्य गणक ऋषिः गायत्री छन्दः । उच्छिष्टगणपतिर्देवता। अभीष्टसिद्धये विनियोगः।

हस्तिमुखाय। लंबोदराय। उच्छिष्टमहात्मने। आं क्रों ह्रीं क्लीं ह्रीं हुं। घे घे उच्छिष्टाय। स्वाहा इति षड्भिः करहृदयादिन्यासौ।

ध्यानं - शरान्धनुः पाशसृणी स्वहस्तैर्दधानमारक्तसरोरुहस्थम्।
विवस्त्रपत्न्यां सुरत प्रवृत्तं उच्छिष्टमम्बासुतमाश्रयेऽहम्।

मन्त्रः - ओं हस्तिमुखाय लम्बोदराय उच्छिष्टमहात्मने आं क्रों ह्रीं क्लीं ह्रीं हुं घे घे उच्छिष्टाय स्वाहा। इति। ओं नमो हस्तिमुखाय लंबोदराय उच्छिष्ट महात्मने क्रां क्रीं ह्रीं घे घे उच्छिष्टाय स्वाहा इति कचित्। एकत्रिंशदक्षरो मन्त्रः।

उच्छिष्टगणपतिमन्त्रः - सप्तत्रिंशदक्षरः

अस्य श्री उच्छिष्टगणपति महामन्त्रस्य, गणक ऋषिः, गायत्री छन्दः। उच्छिष्टगणपति र्देवता। गं बीजं, ह्रीं शक्तिः, आं क्रों कीलकम्। अभीष्टसिद्धये जपे विनियोगः। ओं नमो भगवते एकदंष्ट्राय। हस्तिमुखाय। लंबोदराय। उच्छिष्टमहात्मने। आं क्रों ह्रीं गं। घे घे स्वाहा। इति षड्भिः करहृदया दिन्यासौ। शरान्धनुरिति। अन्यत्पूर्ववत्।

मूलमन्त्रः- ओं नमो भगवते एकदंष्ट्राय हस्तिमुखाय लंबोदराय, उच्छिष्टमहात्मने आं क्रों ह्रीं गं घे घे स्वाहा। एकलक्षं जपः।

उच्छिष्टगणपतिमन्त्रः - (एकचत्वारिंशदक्षरः)

अस्य श्री उच्छिष्टगणपति महामन्त्रस्य मतङ्गो भगवान् ऋषिः। गायत्री छन्दः। उच्छिष्टमहागणपतिर्देवता। गं बीजं, स्वाहा शक्तिः, ह्रीं कीलकम्। अभीष्टसिद्धये जपे विनियोगः।

ओं नमो भगवते एकदंष्ट्राय। हस्तिमुखाय। लंबोदराय। उच्छिष्टमहात्मने। आं क्रों ह्रीं गं। घे घे उच्छिष्टाय स्वाहा। इति षड्भिः करहृदयादिन्यासौ। ध्यानं शरान्धनुरिति।

मूलमन्त्रः - ओं नमो भगवते एकदंष्ट्राय हस्तिमुखाय लम्बोदराय उच्छिष्टमहात्मने आं क्रों ह्रीं घं घे घे उच्छिष्टाय स्वाहा। (रुद्रयामले)

शक्तिगणपतिमन्त्रः - चतुरक्षरः (विघ्नेशत्र्यक्षरी)

भार्गव ऋषिः। विराट्छन्दः। शक्तिगणपतिर्देवता। गां गीमिति षडङ्गन्यासः। ध्यानम् - दक्षोर्ध्वे चाङ्कुशं वामे पाशं वामे त्वधः करे। बीजापूरं स्वयं तत्तु दक्षिणे स्वर्णवर्णकम्। पुष्करे मोदकान् बिभ्रत् कर्णयो दीर्घ चामरे। ध्यायामि। मन्त्रः ह्रां ह्रीं ह्रीं।

अन्यः - गायत्री छन्दः। ध्यानं - हेमाभो हेमभूषवान्। बृहज्जानुस्तुन्दिलश्च लम्बबाहु र्विलोचनः। दक्षोर्ध्वहस्ते पाशं चाधो वामे चाक्षसूत्रकम्। दक्षिणाधो निजं दन्तं ऊर्ध्वे बाहौ तथा सृणिम्। पुष्करेण तु बिभ्राणं मोदकं हेमभूषणम्। शक्तियुक्तं विश्ववन्द्यं गणेशं चिन्तयाम्यहम्। ओं ह्रां ह्रीं ह्रीं।

अन्यः - अस्य श्रीशक्तिगणपतिमहामन्त्रस्य भार्गवऋषिः। विराट् छन्दः। शक्तिगणपतिर्देवता। ग्रीं ब्रीजं, ह्रीं शक्तिः, अभीष्टसिद्धये जपे विनियोगः।

ग्रां ग्रीं ग्रूं ग्रैं ग्रौं ग्रः इति षड्भिः - करहृदयादि न्यासौ। ध्यानं -

विषाणाङ्कुशावक्षसूत्रं च पाशं दधानं करैर्मोदकं पुष्करेण।

स्वपत्न्या युतं हेमभूषाभराढ्यं गणेशं समुद्यद्दिनेशाभमीडे।

मूलमन्त्रः - ओं ह्रीं ग्रीं ह्रीं।

आवरण पूजायां षडंगदेवताः प्रथमे, वक्रतुण्डादयो द्वितीये, ब्राह्म्यादयः तृतीये, इन्द्रादयः चतुर्थे, वज्रादयः पञ्चमे। चतुर्लक्षजपः तद्दशांशं अपूपैर्होमः।

(श्री बीजं, ह्रीं शक्तिः, इति। ध्यानं - गजेन्द्रवदनं साक्षाच्चलत्कर्णं सचामरम्। हेमवर्णं चतुर्बाहुं पाशाङ्कुशधरं परम्। स्वदन्तं दक्षिणे हस्ते सव्ये त्वाम्रफलं तथा। पुष्करे कलशं चैव धारयन्तं विचिन्तये। इति। द्वितीयावरणे वक्रतुण्डादिस्थाने विघ्न -विनायक - वीर - शूर - वरद - हस्तिमुख - एकदन्त - लंबोदर - क्षिप्रप्रसादन - महागणपतयः इति विशेषः क्वचित्।

शक्तिगणपतिमन्त्रः एकादशाक्षरः

गणक ऋषिः निचृद्गायत्री छन्दः। शक्तिगणपतिर्देवता। गं बीजं, ह्रीं शक्तिः, अभीष्ट सिद्धये जपे विनियोगः।

ओं ह्रीं। गं। ह्रीं। वशं। आनय। स्वाहा इति षड्भिः सप्रणवैः करहृदयादिन्यासौ। ध्यानं - हस्तैर्बिभ्रतमिन्दुखण्डवरदौ पाशाङ्कुशौ पुष्करस्पृष्ट स्वप्रमदावराङ्गं अनयाश्लिष्टं ध्वजाग्रस्पृशा। श्यामाङ्ग्या विधृताब्जया त्रिनयनं

चन्द्रार्धचूडं जपारक्तं हस्तिमुखं स्मरामि सततं भोगातिलोलं प्रभुम्। मूलमन्त्रः-
ह्रीं गं ह्रीं वशमानय स्वाहा।

लक्षत्रयं जपः। इक्षुखण्डैर्होमः, अपूपैराज्ययुक्तैर्वा।

शक्तिगणपतिमन्त्रः - द्वादशाक्षरः

गणक ऋषिः, निचृद्गायत्रीछन्दः। शक्तिगणपतिर्देवता।

ओं। ह्रीं। गं। ह्रीं। महागणपतये। स्वाहा इति षड्भिः करहृदयादिन्यासौ॥ ध्यानं - मुक्तागौरं मदगजमुखं चन्द्रचूडं त्रिनेत्रं हस्तैः स्वीयैर्दधतमरविन्दाङ्कुशौ रत्नकुंभम्। अङ्कस्थायाः सरसिजरुचेस्तद् ध्वजालंबिपाणेः देव्या योनौ विनिहितकरं रत्नमौलिं भजामः॥

मूलमन्त्रः - ओं ह्रीं गं ह्रीं महागणपतये स्वाहा। ओं ह्रीं गं ह्रीं इत्यपि मन्त्रः चतुरक्षरः। लक्षमेकं जपः। अष्टद्रव्यै रपूपैश्च। ध्यानान्तरं - श्वेताङ्गं श्वेतवस्त्रं सितकु सुमगणैरर्चितं श्वेतगन्धैः क्षीराब्धौ रत्नपीठे सुरतरुविमले दीप्तसिंहासनस्थम्। दोर्भिः पाशाङ्कुशेष्टाभय धृतिरुचिरं चन्द्रमौलिं त्रिनेत्रं ध्यायामीशं सुशान्त्यै गणपतिममलं सर्वदा सुप्रसन्नम्॥

शक्तिगणपतिमन्त्रः

गणक ऋषिः गायत्री छन्दः। शक्तिगणपतिर्देवता। ओं ह्रीं सं। ओं ह्रीं विरिविरि गणपते। ओं ह्रीं वरवरद। ओं ह्रीं सर्वजनं मे। ओं ह्रीं वशमानय। ओं ह्रीं स्वाहा इति षड्भिः करहृदयादिन्यासौ। ध्यानं -

आलिङ्ग्य देवीमभितो निषण्णं परस्परस्पृष्ट कटीनिवेशम्।
सन्ध्यारुणं पाशसृणी वहन्तं भयापहं शक्तिगणेशमीडे॥

मूलमन्त्रः - ओं ह्रीं सं विरिविरिगणपते (तये) वरवरद सर्वजनं मे वशमानय स्वाहा। ओं ह्रीं सं विरिविरि गणपत्यै वरे वरदे सर्वजनं मे वशमानय स्वाहा॥ (संभूय प्रयोगः)

विरिविरिगणपतिः मन्त्रः - षड्विंशत्यक्षरः ।

गणक ऋषिः । गायत्रीछन्दः । विरिगणपतिर्देवता ।

ह्रीं विरिविरि । ह्रीं गणपते । ह्रीं वरवरद । ह्रीं सर्वलोकं मे । ह्रीं वशमानय । ह्रीं स्वाहा । इति षड्भिः करहृदयादिन्यासौ । ध्यानं - सिन्दूराभमिभाननं त्रिनयनं हस्तेषु पाशाङ्कुशौ बिभ्राणं मधुमत्कपालमनिशं सार्धेन्दुमौलिं भजे । पुष्ट्याश्लिष्टतनुं ध्वजाग्रकरया पद्मोल्लसद्धस्तया तद्योन्याहितपाणिमात्तवसुमत्पात्रोल्लसत्पुष्करम् ॥

मूलमन्त्रः - ओं ह्रीं विरिविरि गणपते वरवरद सर्वलोकं मे वशमानय स्वाहा ।

गणपतिमिथुन पञ्चकं प्रथमावृतौ, आमोदादि षण्मिथुनानि दिगंबराणि द्वितीयायां, षड्ङ्गदेवताः तृतीयायां, ब्राह्म्यादिमातरः चतुर्थ्यां, सास्त्रा लोकपालाः पञ्चम्यां इत्यावरण पूजा ।

चतुर्लक्षं जपः, मध्वक्तैरपूपैः फुल्लकमलैः तिलतण्डलैर्वा होमः ॥

वीरगणपतिरिति नामभेदः । 'विरिविरि गणपति' स्थाने' हरिहरिगणपतये' विरिञ्चिगणपतये इत्यपि भेदः

एकाक्षरगणपति मन्त्रः

अस्य श्री एकाक्षरगणपति महामन्त्रस्य, गणक ऋषिः, निचृद् गायत्री छन्दः, गणपतिर्देवता, अं बीजं, गं शक्तिः इष्टसिद्ध्यर्थे जपे विनियोगः । गां गीं गूं गैं गौं गः इति षड्भिः प्रणवाद्यैः करहृदयादिन्यासौ ।

ध्यानम् - रक्तो रक्ताङ्गरागांशुककुसुमयुतस्तुन्दिलश्चन्द्रमौलिः नेत्रैर्युक्तस्त्रिभिर्वामनकरचरणो बीजपूरात्तनासः । हस्ताग्राक्लृप्त पाशाङ्कुशरदवरदो नागवक्त्रोऽहिभूषो देवः पद्मासनो नो भवतु नतसुरो भूतये विघ्नराजः ॥

लमित्यादि पञ्च पूजाः ।

मूलमन्त्रः - ओं गं (ओं) (१०८ जपः)

लक्षचतुष्कं जपः । तद्दशांशो होमो मोदकपृथुकलाज - सक्तु - इक्षु - नारिकेल - तिल - कदलीफलैः ।

संप्रदायभेदः - ओं गं गणपतये नमः इत्यपि । गणेशार्वशीथर्षोपनिषदि ध्यानं तु - एकदन्तं चतुर्हस्तं पाशमङ्कुशधारिणम् (मङ्कुशमेवच ।) अभयं वरदं (रदं च वरदं) हस्तैर्बिभ्राणं मूषकध्वजम् । रक्तं लम्बोदरं शूर्पकर्णकं रक्तवाससम् । रक्तगन्धानुलिप्तांगं रक्तपुष्पैः सुपूजितम् । भक्तानुकंपिनं देवं जगत्कारणमच्युतम् । आविर्भूतं च सृष्ट्यादौ प्रकृतेः पुरुषात्परम् - ध्यायामि इति । पीठकमले मध्ये गणेशमावाह्य ओं गणाधिपाय नमः (प्राच्यां) ओं गणेशानाय नमः (दक्षिणस्यां) ओं गणनायकाय नमः (प्रतीच्यां) ओं गणक्रीडाय नमः (उत्तरस्यां) (के सरेषु) ओं हृदयदेव्यै नमः । ओं शिरोदेव्यै नमः । ओं शिखादेव्यै नमः । ओं कवचदेव्यै नमः । ओं ने त्रदेव्यै नमः । ओं अस्त्रदेव्यै नमः ।

पूर्वादिपत्रमध्येषु - ओं वक्रतुण्डाय नमः, ओं एकदन्ताय नमः । ओं महोदराय नमः । ओं गजाननाय नमः । ओं लम्बोदराय नमः । ओं विकटाय नमः । ओं विघ्नराजाय नमः । ओं धूम्रवर्णाय नमः । पूर्वादिपत्राग्रेषु - ओं ब्राह्मचै नमः । ओं माहेश्वर्यै नमः । ओं कौमार्यै नमः । ओं वैष्णव्यै नमः । ओं वाराहचै नमः । ओं माहेन्द्रचै नमः । ओं चामुण्डायै नमः । ओं महालक्ष्मचै नमः । ओं इन्द्राय नमः । ओं अग्नये नमः । ओं यमाय नमः । ओं निरृतये नमः । ओं वरुणाय नमः । ओं वायवे नमः । ओं कुबेराय (सोमाय) नमः । ओं ईशानाय नमः । चतुर्थ्यां नालिकेरै र्होमः श्रीप्रदः । सतिलैस्तण्डुलैर्होमः लक्ष्मीप्रदो वश्यदः । त्रिमधुरोपेतैः लाजैः कन्याप्रदः, कन्याया विवाहप्रदश्च ।

मेरुतन्त्रे तु- वैदिकानां गकारमात्रं, दक्षिणाम्नायानां गं इति, पूर्वाम्नायानां गं इति द्विबिन्दुः पश्चिमाम्नाये ग गं इति, ऊर्ध्वाम्नाये गौं इति, उत्तराम्नाये ग्लौं इति, पाताल (अधः) आम्नाये गौं इति मन्त्रभेदः आम्नायते । गणञ्जयाय स्वाहा । एकदंष्ट्राय हुंफट् । अचलकर्णिने नमः । गजवक्त्राय नमः । महादशन

चण्डाय हुं फट् इति षड्भिः गां गीं गूं गैं गौं गः इति बीजयुक्तैः षडङ्गन्यासः । ध्यानं तु - रक्ताम्बरं रक्तवर्णं रक्तगन्धानुलेपनम् । रक्तपुष्पैः पूज्यमानं तुन्दिलं चन्द्रमौलिनम् । त्रिनेत्रं वामनं विघ्नाधीशं पूज्यं च शुण्डिनम् । वामे दक्षे द्वयोः पाशाङ्कुशौ पाण्योस्तु बिभ्रतम् । पद्मासनं सर्वभूषं ध्याये द्विघ्नविनायकम् ॥ इति विशेषो दृश्यते ।

हेरम्बगणपतिमन्त्रः-

अस्य श्रीहेरम्ब महामन्त्रस्य, गणक ऋषिः । निचृद् गायत्री छन्दः । हेरम्बो देवता । गां गीं गूं गैं गौं गः इति न्यासौ । ध्यानम् । मुक्ताकाञ्चन नीलकुन्द घृसृणच्छायैस्त्रिनेत्राञ्चितैः नागास्यै र्हरिवाहनं शशिधरं हेरम्बमर्कप्रभम् । दृप्तं दानमभीति मोदकरदानब्जं शिरोऽक्षात्मिकां मालां मुद्गरमंकुशं त्रिशिखकं दोर्भिर्दधानं भजे ॥ लमित्यादिपञ्चपूजा ।

मूलमन्त्रः - ओं गूं नमः । (१०८ जपः) (ओं गं अथवा ओं ढां इत्यपि ।) लक्षत्रयं जपः । तद्दशांशहोमः ।

ओं हुं हुं महासिंहासनाय हेरम्बाय नमः इति आसनम् ।

ओं गं इति आवाहनादि षोडशोपचाराः । हृदयदेवतादिपूजा, दिक्पाल पूजा । दिक्पालायुधपूजा । षष्ठ्यां मोदकैः जुहुयात् चतुःसहस्रं चतुःशतं वा, अष्टम्यां कुमुदैः । चतुर्दश्यामपूपैः इष्टसिद्धये । पर्वदिने एभिरेव सर्वकामप्रदः । पाशाङ्कुशौ कल्पलतां स्वदन्तं करैर्वहन्तं कनकाद्रिकान्तम् । सोपान पंक्त्या दिननाथबिम्बादायान्तमम्भोजगतं स्मरामि । इत्यपि ध्यानमस्ति ।

क्षिप्रगणपतिमन्त्रः

अस्य श्री क्षिप्रगणपति महामन्त्रस्य, गणक ऋषिः । विराट् छन्दः । क्षिप्रगणपति र्देवता । गां गीं गूं गैं गौं गः इति षड्भिः करन्यासहृदयन्यासौ । ध्यानम् । पाशाङ्कुशौ कल्पलतां विषाणम् दधत्स्वतुण्डाहित बीजपूरः । रक्तस्त्रिणेत्रस्तरुणेन्दुमौलिः हारोज्ज्वलो हस्तिमुखोऽवताद्वः । लमित्यादि पञ्चपूजाः ।

मूलमन्त्रः - ओं गं क्षिप्रप्रसादनाय नमः। (१०८ जपः)

लक्षं जपः। तिलैर्मधुरत्रयेण अष्टद्रव्यैर्वा होमः।

एकाक्षरमन्त्रजप क्रमोक्ते पीठे षडङ्गानि, विघ्नानष्टौ ओं विघ्नाय नमः। ओं विनायकाय नमः। ओं वीराय नमः। ओं शूराय नमः। ओं वरदाय नमः। ओं इभवक्त्राय नमः। ओं एकरदाय नमः। ओं लम्बोदराय नमः। पत्राग्रेषु ब्राह्म्यादिमातॄः ततो दिक्पालान् तदस्त्राणि च संपूज्य देवं पूजयेत्। पायसेन होमः श्रीप्रदः। आज्येन प्राणिवश्यं, लोष्टवर्चोयुतनालिकेरहोमेन इष्टसिद्धिः। अष्टद्रव्यैः त्रिमधुरयुक्तैः होमे कृते राजानो वश्याः। प्रातः प्रत्यूषे चतुश्चत्वारिंशद्वारं विघ्नराजस्य मस्तके शुभोदकैः तर्पयेत् अनेन मन्त्रेण। पाशाङ्कुशौ कल्पलतां स्वदन्तं करैर्वहन्तं कनकाद्रि कान्तम्। सोपानपंक्त्या दिननाथबिम्बात् आयान्तमंभोजगतं स्मरामि। बिम्बा दम्बुदवत्समेत्य सवितुः सोपानकैः राजतैः तोयं तोयजविष्टरं धृतलतादन्तं सपाशाङ्कुशम्। नासां साध्यनृके विधाय सुधया तद्रन्ध्रनिर्यातया सिञ्चन्तं वपुरन्वहं गणपतिं ध्यायेऽमृतैस्तर्पये। इति भावनायां विशेषः। ध्याने क्वचिद्विशेषः। धृतपाशाङ्कुश कल्पकलतिकास्वरदश्च बीजपूरयुतः। शशिश कलकलितमौलिः त्रिलोचनोऽरुण तनुश्च गजवदनः। भासुरभूषणदीप्तो बृहदुदरः पद्मविष्टरो ललितः (ल्लसितः)। ध्येयोऽनायतदोः पद सरसिरुहः संपदे सदा मनुजैः॥

## कुक्षिगणपतिमन्त्रः एकत्रिंशदक्षरः

गणक ऋषिः निचृद्गायत्री छन्दः। कुक्षिगणपतिः देवता।
ओं हुं ग्लौं। ठठ। राज। सर्वजनहृदय मतिमुखक्रोधजिह्वाः।
स्तंभय स्तंभय। स्वाहा इति षड्भिः करहृदयादिन्यासौ। ध्यानम् -
ऐक्षवजलनिधिमध्ये द्वीपे सर्वर्तुसुन्दरे श्रीले।
मणिमयमण्टपमध्ये माणिक्यमणिप्रभाक्तभूमितले।
सिंहमुखपादपीठे सरसिजपद्मे समासीनम्।
गजवदनं तं ध्याये पाशाङ्कुशिनं महाकुक्षिम्।

उदरगतच्छिद्राढ्यं शङ्करसुसमाहितात्मकुक्षिं च।
सर्वालङ्कृतिदीप्तं वाञ्छितदमहीननद्धाङ्गम्॥

मूलमन्त्रः - ओं हुं ग्लौं ठठ राजसर्वजनहृदयगतिमति मुखक्रोधजिह्वाः स्तंभय स्तंभय स्वाहा। लक्षजपः। रजनीचूर्णमिश्रितैर्नालिकेरैः होमः।

## अर्कगणपतिः एकोनत्रिंशदक्षरः

गणक ऋषिः, विराट् छन्दः अर्कगणपति र्देवता।
ओं गं गणपते। अर्कगणपते। वरवरद। सर्वजनं मे। वशमानय। स्वाहा इति षड्भिः करहृदयादिन्यासौ। ध्यानं - मूषारूढं लम्बसूत्रं सर्पयज्ञो पवीतिनम्। विषाणं पाशकमलं मोदकञ्च करैर्दधत्। मुक्तामणिलताजालैः भूषितं भुवनेश्वरम्। भद्रासनोपविष्टं तं ध्यायाम्यनिशमादरात्।
मूलमन्त्रः - ओं गं गणपते अर्कगणपते वरवरद सर्वजनं मे वशमानय स्वाहा।

## लक्ष्मीगणपतिमन्त्रः अष्टविंशत्यक्षरः।

अस्य श्रीलक्ष्मीगणपतिमहामन्त्रस्य, अन्तर्यामी ऋषिः, गायत्री छन्दः, लक्ष्मीगणपतिर्देवता। श्रीं बीजं, स्वाहा शक्तिः, अभीष्टसिद्धये जपे विनियोगः। श्रां गां, श्रीं गीं, श्रूं गूं श्रैं गैं, श्रौं गौं, श्रः गः इति षड्भिः प्रणवाद्यैः करहृदयादिन्यासौ। ध्यानं - दन्ताभये चक्रवरौ दधानं कराग्रगस्वर्णघटं त्रिनेत्रम्। धृताब्जयाऽऽलिङ्गित मब्धिपुत्र्या लक्ष्मीगणेशं कनकाभमीडे।

मूलमन्त्रः। ओं श्रीं गं सौम्याय गणपतये वर वरद सर्वजनं मे वशमानय स्वाहा। आवरणेषु षट्कोणकेसरेषु षडङ्गदेवताः, देवस्य दक्षिणे पार्श्वे शङ्खनिधिः, वामे पद्मनिधिश्च प्रथमे, अष्टदलेषु, बलाका, विमला, कमला, वनमालिका, विभीषिका, मालिका, शाङ्करी, वसुबा(पा)लिका, इत्यष्टौ शक्तयो द्वितीये, भूपुरे इन्द्राद्याः सायुधाः। चतुर्लक्षजपः।

त्रैलोक्यमोहनगणपतिमन्त्रः त्रयस्त्रिंशदक्षरः ।

गणकः ऋषिः, गायत्रीछन्दः । त्रैलोक्यमोहनगणपतिर्देवता । अभीष्ट सिद्धये जपे विनियोगः । वक्रतुण्डैकदंष्ट्राय क्लीं ह्रीं श्रीं गं । गणपते । वर वरद । सर्वजनं । मेवशमानय । स्वाहा इति षड्भिः प्रणवाद्यैः करहृदया दिन्यासौ । ध्यानं-गदाबीजपूरे धनुःशूलचक्रे सरोजोत्पले पाशधान्याग्र दन्तान् । करैः सन्दधानं स्वशुण्डाग्रराजन्मणीकुंभमंकाधिरूढं स्वपत्न्या ॥ सरो जन्मना भूषणानां भरेणोज्वलद्धस्त तन्व्या समालिङ्गिताङ्गम् । करीन्द्राननं चन्द्रचूडं त्रिनेत्रं जगन्मोहनं रक्तकान्तिं भजे तम् ॥ मूलमन्त्रः - वक्रतुण्डै कदंष्ट्राय क्लीं ह्रीं श्रीं गं गणपते वरवरद सर्वजनं मे वशमानय स्वाहा ।

आवरणेषु षडङ्गदेवताः प्रथमे षट्कोणकेसरेषु, द्वितीयेऽष्टदले वामा ज्येष्ठा रौद्री काली कलविकरणी बलविकरणी, बलप्रमथिनी, सर्वभूतदमनी इति शक्तयः, मनोन्मनी देवस्याग्रे, प्रमोदः सुमुखः दुर्मुखः विघ्ननाशः इति चतुर्दिक्षु, तृतीये ब्राह्मयाद्याः आं ईं ऊं ऋं लूं ऐं औं अः इति बीजान्विताः मातरः, भूपुरे इन्द्राद्याः सायुधाः । चतुर्लक्षं जपः ।

हरिद्रागणपतिमन्त्रः - द्वात्रिंशदक्षरः

मदन ऋषिः अनुष्टुप्छन्दः । हरिद्रागणपतिर्देवता । अभीष्टसिद्धये जपे विनियोगः । ग्लौं बीजं, स्वाहा शक्तिः । हुं गं ग्लौं । हरिद्रागणपतये । वर वरद । सर्वजनहृदयं । स्तंभय स्तंभय । स्वाहा । इति षड्भिः सप्रणवैः करहृदयादिन्यासौ । ध्यानं - पाशाङ्कुशौ मोदकमेकदन्तं करैर्दधानं कनका सनस्थम् । हारिद्रखण्डप्रतिमं त्रिनेत्रं पीतांशुकं रात्रिगणेशमीडे ॥

मूलमन्त्रः - ओं हुं गं ग्लौं हरिद्रागणपतये वर वरद सर्वजनहृदयं स्तंभय स्तंभय स्वाहा ।

आवरणेषु षडङ्गदेवताः प्रथमे, अष्टदलेषु वामा ज्येष्ठा रौद्री काली कल विकरणी बलविकरणी बलप्रमथिनी, सर्वभूतदमनी इति शक्तयः, मनोन्म

नीशक्तिः देवस्याग्रे। प्रमोदः सुमुखः दुर्मुखो विघ्ननाशश्च चतुर्दिक्षु चेति द्वितीये। अष्टदलाग्रे ब्राह्मचाद्याः तृतीये। इन्द्राद्या भूपुरे सायुधाः। चतुर्लक्षजपः। (रात्रिः-हरिद्रा)

अन्यथापि - गां ग्लां, गीं ग्लीं, गूं ग्लूं, गैं ग्लैं, गौं ग्लौं, गः ग्लः इति करहृदयादिन्यासौ। पाशाङ्कुशौक्षवधनुः शरपद्मदन्त शाल्यग्ररत्नकल शाभरणाभिरामम्। पार्श्वस्थदारयुगलं कनकाभमीडे हारिद्रभं गणपतिं करुणानिवासम्॥

ऋणहरगणपतिः पञ्चदशाक्षरः

सदाशिव ऋषिः। अनुष्टुपुछन्दः। ऋणहरगणपतिर्देवता। ग्लौं बीजं, गः शक्तिः गों कीलकम्। सकल ऋणनाशे जपे विनियोगः।

ओं गणेश। ऋणं छिन्धि। वरेण्यं। हुं। नमः। फट् इति षड्भिः करहृदयादिन्यासौ। ध्यानं -

सिन्दूरवर्णं द्विभुजं गणेशं लम्बोदरं पद्मदले निविष्टम्।
ब्रह्मादिदेवैः परिसेव्यमानं सिद्धैर्युतं तं प्रणमामि देवम्॥
मन्त्रः - ओं गणेश ऋणं छिन्धि वरेण्यं हुं नमः फट्।

ऋणहरस्तोत्रेण संपुटितं जपेयुः। तद्यथा
सृष्टयादौ ब्रह्मणा सम्यक्पूजितः फलसिद्धये।
सदैव पार्वती पुत्रः ऋणनाशं करोतुमे॥

त्रिपुरस्य वधात्पूर्वं शंभुना सम्यगर्चितः। सदैव....।
हिरण्यकश्यप्वादीनां वधार्थे विष्णुनार्थितः। सदैव ....।
महिषस्य वधे देव्याः गणनाथः प्रपूजितः। सदैव ....।
तारकस्य वधात्पूर्वं कुमारेण प्रपूजितः। सदैव ....।
भास्करेण गणेशो हि पूजितश्छविसिद्धये। सदैव ....।
शशिना कान्तिवृद्ध्यर्थं पूजितो गणनायकः। सदैव ....।
पालनाय च तपसां विश्वामित्रेण पूजितः। सदैव ....।

इदं ऋणहरं स्तोत्रं तीव्रदारिद्र्यनाशनम्।
एकवारं पठेन्नित्यं वर्षमेकं समाहितः।
दारिद्र्यं दारुणं त्यक्त्वा कुबेरसमतां व्रजेत्॥ (भाग. १-२२३ पृ)

पञ्चमुखविघ्नेश्वर मन्त्रः -

अस्य श्री पञ्चमुख विघ्नेश्वर महामन्त्रस्य, सदाशिव ऋषिः। देवी गायत्री छन्दः। पञ्चमुखविघ्नेश्वरो देवता। गं बीजं, ह्रीं शक्तिः, सर्ववशीकरणे ऐश्वर्य सिद्ध्यर्थे जपे विनियोगः।

ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः इति करन्यासहृदयादिन्यासौ।

ध्यानं - मृगाधिपतिवाहनं विविधवर्णपञ्चाननं
उदाररमयान्वितं उरगभूषणाढ्यं विभुम्।
सदा वरदमव्ययं तरुणसूर्यकोटिप्रभं
सदाशिवगणाधिपं सकलदेवदेवं भजे॥

लमित्यादि पञ्चपूजाः।

मन्त्रः - ओं श्रीं ह्रीं क्लीं ग्लौं रं तं अं वां सं पञ्चवक्त्र सदाशिवगणपतये वर वरद सर्वजनं मे वशमानय सकलैश्वर्यं प्रयच्छ प्रयच्छ स्वाहा।

गणेशाङ्कनिवासिनी महालक्ष्मीमन्त्रः (वल्लभाकल्पः)

गणक ऋषिः निचृद्गायत्री छन्दः। गणेशाङ्कनिवासिनी लक्ष्मीर्देवता। श्रीं बीजं, ह्रीं शक्तिः। स्वाहा कीलकम्। ओं श्रां। श्रीं श्रीं। ह्रीं श्रूं। क्लीं श्रैं। ग्लौं श्रौं। गं श्रः इति षड्भिः सप्रणवैः करहृदयादिन्यासौ। ध्यानं -
मुक्ताभां दिव्यवस्त्रां मृगमदतिलकां फुल्लकल्हारमालां
केयूरैर्मेखलाद्यैः नवमणि खचितैः भूषणैर्भासमानाम्।
कर्पूरामोदवक्त्रां अपरिमितकृपापूर्णनेत्रारविन्दां
श्रीलक्ष्मीं पद्महस्तां जितपतिहृदयां विश्वभूत्यै नमामि॥

मूलमन्त्रः- ओं श्रीं ह्रीं क्लीं ग्लौं गं ओं नमो भगवति महालक्ष्मि वरदे श्रीं विभूत्यै स्वाहा। अष्टाविंशतिसहस्रजपः। ऐश्वर्यप्रदः।

यन्त्रः - मध्ये तारं च लक्ष्मीं हुतवहभवने शक्तिमार क्षमार्णान् अष्टाब्जे त्वष्टवर्णान् स्वरदलकमले शिष्टवर्णान् क्रमेण। तद्बाह्ये चन्द्रवर्णं तदनु पुरमही कोणलक्ष्मीसमस्तं त्रैलोक्यैश्वर्य जातप्रदं इदमतुलं सर्वसौभाग्ययन्त्रम्।

गणपतित्र्यक्षरी

शुक्रः ऋषिः। गायत्री छन्दः। गणपतिर्देवता। ओं बीजं, ह्रीं शक्तिः। अभीष्टसिद्ध्यर्थे जपे विनियोगः। ह्रीं। श्रीं। ह्रीं। ह्रीं। श्रीं। ह्रीं इति गां गीं गूं गैं गौं गः इतिवा षड्भिः प्रणवयुतैः करहृदयादिन्यासौ। ध्यानं -

स्वर्णवर्णं चतुर्बाहुं पाशाङ्कुशधरं विभुम्।
आम्रपात्रस्वदन्ताढ्यं शक्तियुक्तं विचिन्तये॥

मूलमन्त्रः - ओं ह्रीं श्रीं ह्रीं।

लक्ष्मीगणपति मन्त्रः

गणक ऋषिः। अनुष्टुप्छन्दः। लक्ष्मीगणेशो देवता। ओं नमः। लक्ष्मीगणेशाय। मह्यं। पुत्रं। प्रयच्छ। स्वाहा। इति षड्भिः करहृदया दिन्यासौ।

मूलमन्त्रः - ओं नमो लक्ष्मीगणेशाय मह्यं पुत्रं प्रयच्छ स्वाहा।

मन्त्रजपसिद्धनवनीतं ऋतुस्नाता स्त्री सुताप्तये खादेत्॥

षडाम्नायक्रमे स्मृताः गणपतिमन्त्राः।

(श्रीनाथादिगुरुत्रयं गणपतिमिति गुरुमण्डल मध्यगततया ध्याताः)

क्षिप्रगणपतिः - ४. ओं श्रीं ह्रीं ग्लौं गणपतये सर्वकार्यसिद्धिं कुरु कुरु स्वाहा। (४. ओं श्रीं ह्रीं क्लीं)

वश्यगणपतिः - ४ ओं श्रीं ह्रीं सर्वकार्य विघ्नप्रशमनाय सर्वराज्यवश्य कराय सर्वस्त्री पुरुषाकर्षणाय सर्वलोक वशीकरणाय आं ह्रीं क्रों हुं फट् स्वाहा।

नवनीतगणपतिः - ४ आं ग्लौं नवनीतगणपतये सर्वजनान् मे वशमानय स्वाहा।

शक्तिगणपतिः - ४. ओं श्रीं ह्रीं क्लीं ग्लौं ऐं वद वद वाग्वादिनि सिद्धगणपतये गीं भगवति स्वाहा।

उच्छिष्टगणपतिः - ४. ओं हस्तिमुखाय लम्बोदराय उच्छिष्टाय महात्मने ओं क्रों ह्रीं क्लीं ग्लौं गं घे घे उच्छिष्टाय स्वाहा।

एकाक्षरगणपतिः - ४. ओं गं ओं।

विरिगणपतिः - ४. ओं ह्रीं सं विरि विरि गणपति वर वरद सर्वजनं मे वशमानय स्वाहा।

कुलगणपतिः - ओं नमो भगवते कुलगणपतये गां गीं गूं गं शक्तियोनिविनिहित शुण्डाग्राय मदमन्थराय (मन्थराय) सर्वविघ्नान् निवारय निवारय हेरम्ब हेरम्ब आगच्छ आगच्छ हुं फट् स्वाहा।

कुमारगणपतिः - ४. ह्रीं गं ग्लौं गणपतये ग्लौं गं ह्रीं।

सङ्कटहरगणपतिः - ४ श्रीं ओं गणपतये नमो वर वरद मे प्रतिबन्ध - ऋण - दारिद्रय - रोगसङ्कटान् निवारय स्वाहा।

षडक्षरगणपतिः - ४. ओं वक्रतुण्डाय हुं।

लक्ष्मीगणपतिः - ओं श्रीं गं सौम्यगणपतये वर वरद सर्वजनं मे वशमानय स्वाहा।

महद्भिः न्यासादिकं विना उपदिश्यमाना मन्त्राः

ॐ नमो भगवते गजाननाय।

ॐ श्रीगणेशाय नमः।

ॐ श्रीं क्लीं गौं गः श्रीन्महागणाधिपतये नमः।

ॐ श्रीं क्लीं गौं वरदमूर्तये नमः।

ॐ ह्रीं श्रीं क्लीं नमो भगवते गजाननाय।

ॐ ह्रीं श्रीं क्लीं नमो गणेश्वराय ब्रह्मरूपाय चारवे।

सर्वसिद्धिप्रदेयाय ब्रह्मणस्पतये नमः।

ओं बीजाय भालचन्द्राय गणेशपरमात्मने।

प्रणतक्लेशनाशाय हेरम्बाय नमो नमः॥

ओं आपदामपहर्तारं दातारं सुखसम्पदाम्।

क्षिप्रप्रसादनं देवं भूयो भूयो नमाम्यहम्॥

ओं नमो गणपते तुभ्यं हेरम्बायैकदन्तिने।
स्वानन्दवासिने तुभ्यां ब्रह्मणस्पतये नमः ।।
ओं श्रीगजानन जय गजानन।
ओं श्रीगजानन जय गजानन जयजय गजानन
ओं शुक्लांबरधरं देवं शशिसूर्यनिभाननम्।
प्रसन्नवदनं वन्दे सर्वविघ्नोपशान्तये ।।
ओं नमस्तस्मै गणेशाय ब्रह्मविद्याप्रदायिने।
यस्यागस्तायते नाम विघ्नसागरशोषणे ।।
ओं ह्रीं गं ह्रीं गणपतये नमः ।।
ॐ वक्रतुण्डाय नमः।
ओं महाकर्णाय विद्महे वक्रतुण्डाय धीमहि।
तन्नो दन्ती प्रचोदयात्। (गणेशगायत्री)
ओं यद्भ्रूप्रणिहितां लक्ष्मीं लभन्ते भक्तकोटयः।
स्वतन्त्रमेकं नेतारं विघ्नराजं नमाम्यहम्।
ओं नमः सिद्धिविनायकाय, सर्वकार्यकर्त्रे, सर्वविघ्न प्रशमनाय, सर्वराज्य वश्यकरणाय, सर्वजनसर्वस्त्री पुरुषाकर्षणाय श्रीं ओं स्वाहा।
ओं ह्रीं क्लीं वीरवरगणपतये वः वः इदं विश्वं मम वशमानय ओं ह्रीं फट्।
ओं गीं गूं गणपतये नमः स्वाहा।
ओं गं गणपतये नमः।
ओं गं गणपतये सर्वविघ्नहराय सर्वाय सर्वगुरवे लम्बोदराय ह्रीं गं नमः।

ओं ओं ह्रीं चोरगणपतये ममानुकूलं प्रयच्छ मां रक्ष हुं फट् स्वाहा।

श्रीगणपतिमालामन्त्राः

ॐ क्लीं ह्रीं श्रीं ऐं ग्लौं ॐ ह्रीं क्रौं गं ॐ नमो भगवते महागणपतये स्मरणमात्रसन्तुष्टाय सर्वविद्याप्रकाशकाय सर्वकामप्रदाय भवबन्ध विमोचनाय ह्रीं सर्वभूतबन्धनाय क्रों साध्याकर्षणाय क्लीं जगत्त्रयवशी करणाय सौः सर्वमनःक्षोभणाय श्रीं महासम्पत्पदाय ग्लौं भूमण्डला धिपत्यप्रदाय

महाज्ञानप्रदाय चिदानन्दात्मने गौरीनन्दनाय महायोगिने शिवप्रियाय सर्वानन्दबर्धनाय सर्वविद्याप्रकाशनप्रदाय द्रां चिरञ्जीविने ब्लूं सम्मोहनाय ॐ मोक्षप्रदाय। फट् वशीकुरु वशीकुरु। वौषडाकर्षणाय हुं विद्वेषणाय विद्वेषय विद्वेषय, । फट् उच्चाटयोच्चाटय। ठः ठः स्तम्भय स्तम्भय। खे खें मारय मारय। शोषय शोषय । परमन्त्रयन्त्रतन्त्राणि छेदय छेदय। दुष्टग्रहान्निवारय निवारय। दुःखं हर हर। व्याधिं नाशय नाशय। नमः सम्पन्नाय सम्पन्नाय स्वाहा । सर्वपल्लवस्वरूपाय महाविद्याय गं गणपतये स्वाहा । यन्मन्त्रे क्षितलाञ्छिताभमनघं मृत्युश्च वज्राशिषो भूतप्रेतपिशाचकाः प्रतिहता निर्घातपातादिव । उत्पन्नं च समस्तदुःखदुरितं ह्युच्चाटनोत्पादकं वन्देऽभीष्टगणाधिपं भयहरं विघ्नौघनाशं परम्। ॐ गं गणपतये नमः । (वनदुर्गोपनिषदि)

ओं नमो महागणपतये, महावीराय, दशभुजाय, मदनकाल विनाशन, मृत्युं हन हन, यम यम, मद मद, कालं संहर संहर, सर्वग्रहान् चूर्णय चूर्णय, नागान् मूढय मूढय रुद्ररूप, त्रिभुवनेश्वर, सर्वतोमुख हुं फट् स्वाहा ॥

ओं नमो गणपतये श्वेतार्कगणपतये श्वेतार्कमूलनिवासाय, वासुदेव प्रियाय, दक्षप्रजापतिरक्षकाय, सूर्यवरदाय, कुमारगुरवे, ब्रह्मादि सुरा सुरवन्दिताय, सर्पभूषणाय, शशांकशेखराय, सर्पमालालंकृतदेहाय, धर्मध्वजाय, धर्मवाहनाय, त्राहि त्राहि, देहि देहि, अवतर अवतर, गं गणपतये वक्रतुण्डगणपतये ,वरवरद सर्वपुरुषवशंकर, सर्वदुष्टमृगवशंकर, सर्वस्ववशंकर, वशीकुरु वशीकुरु, सर्वदोषान् बन्धय बन्धय, सर्वव्याधीन् निकृन्तय निकृन्तत्र, सर्वविषाणि संहर संहर, सर्वदारिद्रयं मोचय मोचय, सर्वविघ्नान् छिन्धि छिन्धि, सर्ववज्राणि स्फोटय स्फोटच, सर्वशत्रून् उच्चाटय उच्चाटय, सर्वसिद्धिं कुरु कुरु, सर्वकार्याणि साधय साधय गां गीं गूं गैं गौं गं गणपतये हुं फट् स्वाहा ॥

ओं नमो गणपते महावीर दशभुज मदनकालविनाशन मृत्युं हन हन, कालं संहर संहर, धम धम, मथ मथ त्रैलोक्यं मोहय मोहय ब्रह्मविष्णु रुद्रान्मोहय

मोहय अचिन्त्य बलपराक्रम सर्वव्याधीन् विनाशय विनाशय, सर्वग्रहान् चूर्णय, नागान्मोटय मोटय, त्रिभुवनेश्वर सर्वतोमुख हुं फट् स्वाहा।

ओं नमो गणपतये महावीर दशभुज, मदनकालविनाशन मृत्युं हन हन धम धम मथ मथ कालं संहर संहर सर्वग्रहांश्चूर्णय चूर्णय नागान्मोटय मोटय रुद्ररूप त्रिभुवनेश्वर सर्वतो मुख हुं फट् स्वाहा। (भूतविषादि शमनोऽयम्)

**वल्लभेशोपनिषदि उपदिष्टा मन्त्राः**

गायत्रीगणनाथ मन्त्रः

ओं तत्सवितुर्वरेण्यं ओं श्रीं ह्रीं क्लीं ग्लौं गं भर्गो देवस्य धीमहि गणपते वरद वरद धियो यो नः प्रचोदयात् सर्वजनं मे वशमानय स्वाहा।

अन्यो मन्त्रः - ओं गं तत्सवितुर्वरेण्यं ओं श्रीं ह्रीं क्लीं ग्लौं गं ओं गं भर्गो देवस्य धीमहि ओं श्रीं ह्रीं क्लीं ग्लौं गं ओं गं धियो यो नः प्रचोदयात् ओं श्रीं ह्रीं क्लीं ग्लौं गं।

अन्यो मन्त्रः - ओं गं ओं श्रीं ह्रीं क्लीं ग्लौं गं ओं तत्स वितुर्वरेण्यम्। भर्गोदेवस्य धीमहि। धियो यो नः प्रचोदयात्। ओं गं ओं श्रीं ह्रीं क्लीं ग्लौं गं॥

अन्यो मन्त्रः - ओं गं ओं श्रीं ह्रीं क्लीं ग्लौं गं ओं तत्सवितुर्वरेण्यं ओं गं ओं श्रीं ह्रीं क्लीं ग्लौं गं, ओं गं ओं श्रीं ह्रीं क्लीं ग्लौं गं भर्गो देवस्य धीमहि ओं गं ओं श्रीं ह्रीं क्लीं ग्लौं गं, ओं गं ओं श्रीं ह्रीं क्लीं ग्लौं गं धियो योनः प्रचोदयात् ओं गं ओं श्रीं ह्रीं क्लीं ग्लौं गं॥

बालागणपति मन्त्रः - ओं ऐं ओं श्रीं ह्रीं क्लीं ग्लौं गं क्लीं गणपते वरदवरद सौः सर्वजनं मे वशमानय स्वाहा।

नीलकण्ठगणेशमन्त्रः। (विषहरः) ओं प्रों ओं श्रीं ह्रीं क्लीं ग्लौं गं नृं (न्रीं) गणपते वरद वरद ठं (ठः) सर्वविषं मे नाशय स्वाहा।

सौरगणेशमन्त्रः। (रोगहरः) ओं ज्यों सः सःज्यों घृणिस्सूर्य आदित्य ओं ओं श्रीं ह्रीं क्लीं ग्लौं गं गणपते वरद वरद ज्यों सः सर्वरोगान्हर हर सःज्यों स्वाहा।

अघोरगणपनाथ मन्त्रः - ओं गं गः ओं ह्रीं स्फुर स्फुर प्रस्फुर प्रस्फुर घोर घोरतनुरूप चट चट प्रचट प्रचट कह कह वम वम ओं श्रीं ह्रीं क्लीं ग्लौं गं गणपते वरद वरद बन्ध बन्ध घातय घातय हुं फट् स्वाहा।

विद्यादायकगणेशमन्त्रः - ऐं ब्लूं ओं श्रीं ह्रीं क्लीं ग्लौं गं ऐं ब्लूं गणपते वरद वरद ऐं ब्लूं विद्यां देहि स्वाहा।

संपद्गणेशमन्त्रः - ओं श्रीं ग्लौं ह्रीं ओं श्रीं ह्रीं क्लीं ग्लौं गं श्रीं ग्लौं ह्रीं गणपते वरद वरद श्रीं ग्लौं ह्रीं सर्वजनं मे वशमानय संपदं देहि स्वाहा।

इतरे - विघ्नेश्वरमालामन्त्रः (पञ्चपञ्चादक्षरः) - ओं ह्रीं गं नमः सर्वविघ्नाधिपाय सर्वार्थसिद्धिदाय सर्वदुः खप्रशमनाय एह्येहि भगवन् सर्वा आपदः स्तंभय स्तंभय ह्रीं गं गां नमः स्वाहा क्रों ह्रीं ॥

मोदकगणपतिमन्त्रः - ओं मं महागणपतये एकदन्ताय हेरम्बाय मोदकहस्ताय नारिकेलप्रियाय सर्वाभीष्ट प्रदायिने श्रीं ह्रीं क्लीं सर्वजनं मे वशमानय स्वाहा।

ऋणमोचनगणपतिमन्त्रः - ओं ग्लां ऋणमोचन गणधिपतये नमः।

सङ्कटहरगणपतिमन्त्रः- ओं वक्रतुण्डाय हुं ओं नमो हेरम्ब मदमोदित मम सङ्कटं निवारय स्वाहा (हुं फट् स्वाहा)

बुद्धिगणपतिमन्त्रः - ओं ऐं गं वाग्गणपतये नमः।

गुरुगणपतिमन्त्रः - ओं गं गणपतये सर्वविघ्नहराय सर्वाय सर्वगुरवे लम्बोदराय ह्रीं गं नमः।

मोहनगणपतिमन्त्रः - ओं अं क्लीं सर्वशक्तिगणाधीश मां रक्ष रक्ष मम सान्निध्यं कुरु कुरु अष्टैश्वर्याणि भूतिं कुरु कुरु सर्वदुःखं नाशय नाशय। सर्वजनं मे वशमानयानय मोहनोत्तमाय गणपतये हुं फट् स्वाहा।

चिन्तामणिगणपतिमन्त्रः (स्वर्णाकर्षणगणपति मन्त्रः) ओं क्ष्म्र्यूं क्षिप्रगणपतये स्वर्णगेहे व्यवस्थिताय स्वर्णप्रदाय क्लीं वषट् स्वाहा।

दुर्गागणपतिमन्त्रः -ओं ह्रीं गं ह्रीं दुं दुर्गापुत्राय शक्तिहस्ताय मातृवत्सलाय महागणपतये नमः।

पञ्चाक्षर गणपतिः - ओं श्रीं ह्रीं क्लीं ग्लौं गं ओं नमो गणपतये ओं शिं वर वरद ओं वां सर्वजनं मे ओं यं वशमानय स्वाहा।

दूर्वागणपतिमन्त्रः - ओं ह्रीं ग्लां श्रीं दुं दुरितहराय दूर्वागणेशाय हुंफट्।

## श्रीविद्यागणेशीयवाञ्छाकल्पलतानु क्रमः।

(कुमारतन्त्रे)

शृणु ब्रह्मन् प्रवक्ष्यामि विद्यागणपतेर्मनुम्।
सर्वैश्वर्यप्रदं दिव्यं सर्वलोकविमोहनम्॥
प्रणवं पञ्चबीजाढ्यं विद्याप्रथमखण्डकम्।
गणपतिं चतुर्थ्यन्तं द्वितीयं खण्डमुच्यते॥
वरद्वय-दमुच्चार्य तृतीयं खण्डमेव च।
पश्चात्सर्वजनं मेऽथ वशमानय संयुतम्॥
स्वाहेत्युक्तो गणेशस्य मन्त्रोऽयं सर्वसिद्धिदः।
धनधान्य प्रदः सद्यः सर्वलोकवशङ्करः॥
आयुष्करः प्रजावृद्धिकरो व्याधिविनाशकृत्।
ऋषिर्विद्यागणेशस्य दक्षिणामूर्तिरुच्यते॥
छन्दस्तु देवी गायत्री देवो विद्यागणेश्वरः॥
गं बीजं ह्रीं ततः शक्तिः विनियोगः प्रसादने॥

कुङ्कुमन्यासः -

शुद्धमातृकया न्यस्य कुङ्कुमन्यासमाचरेत्।
अकारादिक्षकारान्तं मूलमन्त्रेण मन्त्रवित्।
पुनः प्रथमखण्डं च खण्डद्वयमतः परम्।
खण्डत्रयं मातृकायां कुङ्कुमन्यासमुत्तमम्।



**श्री विद्यागणपतिः**

द्वाभ्यां विभ्राजमानं धृतकलशमहाभृङ्गलाभ्यां भुजाभ्यां
बीजापूरादि बिभ्रद् दशभुजमरुणं नागभूषं त्रिनेत्रम् ।
सन्ध्यासिन्दूरवर्णं स्तनभरनमितं तुन्दिलं चन्द्रचूडं
कण्ठा दूर्ध्वं करीन्द्रं युवतिमयमधो नौमि विद्यागणेशम् ॥

*ஸ்ரீ வித்யாகணபதி*

एवं न्यस्य महान्यासं मन्त्रन्यासमथाचरेत्।
षड्बीजैश्च समायुक्तं ह्रामित्यादिषडङ्गकम्।

करषडङ्गन्यासः -

सर्वज्ञा नित्यतृप्ता चा (त्तिश्चा) नादिबोधा स्वतन्त्रिका।
तथा नित्यमलुप्ता चानन्तेत्यादौ क्रमान्न्यसेत्।

ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः।
सर्वात्मा च षडङ्गेषु योजनीयास्ततः परम्॥

पदन्यासः

मन्त्रन्यासं ततः कुर्यात् चतुर्दशपदात्मकम्।
पदन्यासं प्रवक्ष्यामि मन्त्रसिद्धि प्रदायकम्।
शिरो भ्रूमध्य वक्त्रेषु कण्ठे बाहुद्वये हृदि।
नाभावूर्वो र्जानुनोश्च पदानि पदयोर्न्यसेत्।
चतुर्दश क्रमान्मन्त्री तारत्रितयपूर्वकम्।
मुद्राः प्रदर्श्य दन्ताद्याः ध्यायेद्विद्यागणेश्वरम्।
द्वाभ्यां विभ्राजमानं वरकनकमहाशृङ्खलाभ्यां भुजाभ्यां
बीजापूरादि बिभ्रद्दशभुजललितं चन्द्रचूडं त्रिनेत्रम्।
सन्ध्यासिन्दूरवर्णं स्तनभरनमितं तुन्दिलं सन्नितम्बं
कण्ठादूर्ध्वं करीन्द्रं युवतिमयमधः स्तौमि विद्यागणेशम्॥

यन्त्रोद्धारः -

बिन्दुत्रिकोणषट्कोणमष्टषोडशपत्रकम्।
वृत्तत्रयं च धरणीसदनत्रयमेव च॥

ब्रह्मन् विद्यागणेशस्य पूजायन्त्रं समीरितम्।
अत्रावाह्य गणाधीशं पूजयेदुपचारकैः॥
अन्त्ययामादि रात्रेश्च जपेदासूर्यदर्शनात्।

## श्री विद्यागणपतिमन्त्रः

(बहवः क्रमाः सन्ति। ते क्रमशो दीयन्ते)

अस्य श्रीविद्यागणपतिमहामन्त्रस्य दक्षिणामूर्तिः ऋषिः। पंक्तिगायत्र्यौ छन्दसी। श्रीविद्यागणपतिर्देवता। ह्रीं बीजं, श्रीं शक्तिः, क्लीं कीलकं श्रीविद्यागणपति प्रीत्यर्थे जपे विनियोगः।

७. (ओं ओं श्रीं ह्रीं क्लीं ग्लौं गं) ह्रां गां। ७. ह्रीं गीं। ७. ह्रूं गूं ७. ह्रैं गैं। ७. ह्रौं गौं। ७. ह्रः गः इति षड्भिः करहृदयादिन्यासौ। भूर्भुवस्सुवरों। दिग्बन्धः ध्यानं - द्वाभ्यां विभ्राजमानं वरकनकमहाशृङ्खलाभ्यां भुजाभ्यां बीजापूरादि बिभ्रद्दशभुजललितं चन्द्रचूडं त्रिनेत्रम्। सन्ध्यासिन्दूरवर्णं स्तनभरनमितं तुन्दिलं सन्नितम्बं कण्ठादूर्ध्वं करीन्द्रं युवतिमयमधः स्तौमि विद्यागणेशम् ॥ लमित्यादिपूजाः।

मूलम् - ओं श्रीं ह्रीं क्लीं ग्लौं गं क एई लह्रीं गणपतये हसकहल ह्रीं वरवरद सकलह्रीं सर्वजनं मे वशमानय स्वाहा। (१६-१०८ जपः) हृदयादिन्यासः भूर्भुस्सुवरों (दिग्विमोकः) ध्यानं, लमित्यादिपूजाः। जपसमर्पणम्।

अत्र क्रम भेदाः।

क ए ईलह्रीं ओं श्रीं ह्रीं क्लीं ग्लौं गं हसकहलह्रीं गणपते वरदवरद सकलह्रीं सर्वजनं मे वशमानय स्वाहा। इति वल्लभेशोपनिषदि मन्त्रस्वरूपम्।

कुमारसंहितानुसारेण देवी गायत्री छन्दः। गं बीजं ह्रीं शक्तिः, क्लीं कीलकं। करहृदयादिन्यासे तु - ओं ऐं ह्रीं श्रीं (४) ओं श्रीं ह्रीं क्लीं ग्लौं गं (६) क एईलह्रीं, सर्वजनं मेवशमानय स्वाहा (१२) सर्वज्ञायै (सर्वज्ञशक्तिधाम्ने) ब्रह्मात्मने ह्रां गां अंगुष्ठाभ्यां नमः - हृदयाय नमः। ४ ६-गणपतये हसकहलह्रीं - १२ - नित्यतृप्तायै (नित्यतृप्तिशक्तिधाम्ने) विष्णवात्मने ह्रीं गीं तर्जनीभ्यां नमः - शिरसे स्वाहा। ४-६-वरवरद सकलह्रीं १२ - अनादिबोधायै (अनादिबोधशक्तिधाम्ने) रुद्रात्मने ह्रूं गूं मध्यमाभ्यां नमः। शिखायै वषट्। ४-६ क एईलह्रीं १२ स्वतन्त्रायै (स्वतन्त्रशक्तिधाम्ने) ईश्वरात्मने ह्रैं गैं अनामिकाभ्यां नमः - कवचायहुं। ४-६ गणपतये हसकहलह्रीं - १२ - नित्यमलुप्तायै (नित्यमलुप्तशक्ति - धाम्ने) सदाशिवात्मने ह्रौ गौं कनिष्ठिकाभ्यां नमः - नेत्रत्रयाय वौषट्। ४-६ वरवरद सकलह्रीं - १२ -

अनन्तायै (अनन्तशक्तिधाम्ने) सर्वात्मने हः गः करतलकरपृष्ठाभ्यां नमः - अस्त्राय फट्। इति।

चतुर्दशाधारन्यासः।

ओं ओं नमः, (मूलाधारे)। ओं श्रीं नमः, (वृषणे)। ओं ह्रीं नमः (लिङ्गमूले) ओं क्लीं नमः (जठरे) ओं ग्लौं नमः (नाभौ)। ओं गं कएईलह्रीं नमः (उदरे)। ओं गणपतये हसकहलह्रीं नमः (हृदये)। ओं वर नमः (उरसि)। ओं वरद सकलह्रीं नमः (गले) ओं सर्वजनं नमः (लंबिकायां)। ओं मे नमः (भ्रूमध्ये)। ओं वशं नमः (ललाटे) ओं आनय नमः (केशान्ते) ओं स्वाहा नमः (मूर्ध्नि)। इति। न्यासानन्तरं भूर्भुवस्सुवरों इति दिग्बन्धः। मूलेन प्राणायामः। दन्तादिसप्तमुद्रा - सर्वसंक्षोभिण्यादि दशमुद्राद र्शनम्। ध्यानं - लमित्यादिपूजाः। ततो मूलमन्त्र जप इति विशेषः।

ध्यानश्लोके तु - धृतकलशमहाशृंखलाभ्यां, दशभुजमरुणं, तुन्दिलं नागभूषं, अधो नौमि इति पाठ भेदः।

ध्यानान्तरमपि -

करीन्द्र वदनं वन्दे त्रिनेत्रं चन्द्रशेखरम्।
अधस्ताद्वनिताकारं सिन्दूरारुणविग्रहम्॥

उत्तुङ्गस्तनभारोद्यद्रत्नभूषणभूषितम्।
क्वणत्किङ्किणिकाकाञ्चीमणिनूपुरभूषितम्॥

बीजापूरं गदां चापं शूलं चक्रं सरोरुहम्।
पाशोत्पले च व्रीह्यग्रं स्वदन्तं रत्नकुंभकम्॥

बिभ्रत्सकङ्कणै र्हस्तैः उभाभ्यां हेमशृङ्खलम्।
बिभ्रतं विद्यागणपं ध्यायामीप्सितसिद्धये॥

ध्यानान्तर मपि-

द्वादशभुजमरुणाभं गजवदनमम्बिकाङ्गनाकारम्।
दिव्यमणिभूषिताङ्गं देवं विद्यागणेश्वरं वन्दे॥

(सगुणं निर्गुणीकृत्य सच्चिदानन्दविग्रहम्।
वामनासापुटेनैव हृत्पद्मे भावये त्प्रभुम्।

तन्मयस्तमनुप्राप्य सपर्यावासि (वाहि) तो भवान्।
मम हृत्कमलं प्राप्य स्थिरो भव विनायक॥

रमा-रमेशौ गिरिजा - गिरिजापती रति-रतिपती भूमिवराहौ पुष्टिगणाधिपौ त्रिकोणाद्बहिः (प्रथमावरणे) रत्यंबा - मनोभवा प्रीत्यंबा - गणेशाश्च तद्बहिः। षट्कोणे (द्वितीयावरणे), ऋद्ध्यामोदौ समृद्धिप्रमोदौ कान्तिसुमुखौ मदनावती - दुर्मुखौ मदद्रवाऽविघ्नौ द्राविणी - विघ्नकर्तारौ, वसुधाराशङ्खनिधी, वसुमती - पद्मनिधी च पार्श्वयोः, लक्ष्मी - सरस्वती - कान्ति (शान्ति) - कीर्ति- पुष्टि - तुष्टि(धृष्टि)देव्यः षट्कोणाग्रे, (तृतीयावरणे) महामाया - मालिनी - वसुमालिनी - मोहिनी - योगिनी - विद्या देव्यः षट्कोणाद्बहिः (चतुर्थे) अष्टकोणे वक्रतुण्ड - एकदंष्ट्र - (दन्त) महागणपति - लम्बोदर - गजवक्त्र - विकट - विघ्नराज - धूम्रवर्णाः। पञ्चमे अनङ्गकुसुमा - अनङ्गमेखला - अनङ्गमदना - अनङ्ग मदनातुरा अनङ्गरेखा अनङ्गवेगिनी - अनङ्गाङ्कुशा - अनङ्गमालिनीदेव्यः। तद्बहिः असिताङ्ग भैरवादयोऽष्टौ ब्राह्म्यादि मातरोऽष्टौ च षष्ठे। सप्तमे शुद्धविद्या - वीरविद्या - भोगविद्या - योगविद्या - वरविद्या - रतिविद्या - बालविद्या - लीलाविद्या - रूपविद्या - कान्तिविद्या - मायाविद्या - मोहविद्या - श्रद्धाविद्या - मेधाविद्या - सर्वविद्या - मोक्षसारविद्याख्याः अधस्ताद्वनिताकाराः गजाननाः दशायुधाः दशभुजा हेमशृंखलायुता नित्याषोडश शक्तयः अणिमादिसिद्धयश्चेति। अष्टमे अष्टविघ्नेश्वराः। सरत्नकुंभानि आयुधानि। इन्द्रादयो लोकपाला नवमे। तत्र ईशानदिशि भैरवः, तस्मै ओं नमो भगवते कुरु कुरु वटुकाय देवीपुत्राय विद्यागणेश परिषदे इमं बलिं गृहाण गृहाण स्वाहेति। चतुर्दिक्षु भूचरखेचर यक्षोराक्षसगणेभ्यः इमां पूजां बलिं गृह्णन्तु साफल्यं कुर्वन्तु हुं फट् स्वाहा। नमो नमः इति निवेदनम्। इति संग्रहः। विस्तरस्तु कौमारसंहिता याम्।

प्रकारान्तरं - गायत्रीबाला पञ्चदशाक्षरी महागणपति मन्त्रसंपुटनं क्रियते। दक्षिणामूर्तिगणकविश्वामित्रा ऋषयः। देवीगायत्रीनिचृद्गायत्र्यनुष्टुभः छन्दांसि।

ऐं बीजं, ह्रींशक्तिः क्लीं कीलकम्।
ओं ह्रीं श्रीं (३) इति सर्वत्र त्रितारीयोजनम्।
ओं ह्रीं श्रीं एं क्लीं सौः ह्रीं (७) इति श्रीविद्यागणेशबीजानि।
ओं ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं (९) इति गुरु पादुकाबीजानि।
७ सर्वज्ञायै ह्रां गां ब्रह्मात्मने। ७ नित्यतृप्तायै ह्रीं गीं विष्णवात्मने। ७. अनादिबोधायै ह्रूं गूं रुद्रात्मने। ७. सर्व स्वतन्त्रायै ह्रै गैं ईश्वरात्मने। ७. नित्यमलु प्तशक्तये (नित्यमलुप्तायै) ह्रौं गौं सदाशिवात्मने। ७. अनन्तायै ह्रः गः सर्वात्मने इति करहृदयादिन्यासौ।
मूलमन्त्रः - ओं श्रीं ह्रीं क्लीं ग्लौं गं - ऐं - क एईलह्रीं तत्सवितुर्वरेण्यं - गणपतये - क्लीं - हसकहलह्रीं - भर्गो देवस्य धीमहि - वरवरद सौः सकलह्रीं धियो योनः प्रचोदयात् - सर्वजनं मे वशमानय स्वाहा इति।

आवरणपूजायां श्रीमहागणपति पञ्चावरणपूजां ललिता नवावरणपूजां च कृत्वा उभयोरावरणयोः मेलनेन मिश्रावरणपूजां च कुर्वन्ति। श्रीविद्यागणेशी इति स्त्रीदेव तात्वेन केचित् उपासते। गुरुमुखैकगम्योऽयं क्रमः। यथा गुरूपदिष्टमाचरणम्। अत्र युक्तौ गुरव एव प्रमाणम्।

## श्रीवाञ्छाकल्पलताक्रमः

ओं गुं गुरुभ्यो नमः। ओं पं परमगुरुभ्यो नमः। ओं पं परमेष्ठिगुरुभ्यो नमः। ओं परापर गुरुभ्यो नमः। ओं श्री शिवाय गुरवे नमः। ओं मेधादक्षिणामूर्तये नमः॥ ओं ह्रीं श्रीं दिव्यौघगुरुभ्यो नमः। ओं ह्रीं श्रीं सिद्धौघगुरुभ्यो नमः। ओं ह्रीं श्रीं मानवौघगुरुभ्यो नमः। ओं ह्रीं श्रीं ऐं क्लीं सौः ह्रीं (७) ओं ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं (९) हंसः शिवः सोहं ह्स्ख्फ्रें हसक्षमलवरयूं सहक्षमलवरयीं ह्सौः स्हौः हंसः शिवस्सोहं स्वरूप निरूपणहेतवे श्रीगुरवे नमः। (७) (९) सोहं हंसः शिवः। हसक्षमलवरयूं सहक्षमलवरयीं ह्सौः स्हौः सोहं हंसः शिवः। स्वच्छ प्रकाशविमर्शहेतवे श्रीपरमगुरवे नमः। (७)(९) हंसः शिवस्सोहं हंसः स्वात्मारामपञ्जरविलीन तेजसे श्रीपरमेष्ठिगुरवे नमः।

वन्दे गुरु पदद्वन्द्वं अवाङ्मनसगोचरम्।
रक्तशुक्लप्रभामिश्रमतर्क्यं त्रैपुरं महः ॥

श्रीशिवाय गुरवे नमः। श्रीमेधादक्षिणामूर्तये नमः। शुक्लांबरधरं + शान्तये। वेदमन्त्रेण मूलमन्त्रेण वा प्राणायामः। ममोपात्त + परमेश्वर प्रीत्यर्थं श्रीवाञ्छाकल्पलतामहामन्त्रजपं करिष्ये॥ (अप उपस्पृश्य)

अस्य श्रीवाञ्छाकल्पलतामहामन्त्रस्य, गणकांगणसंवनना ऋषयः। देवीगायत्री नृचिद्गायत्री त्रिष्टुभनुष्टुप्जगत्यश्छन्दांसि। महात्रिपुरसुन्दरी महागणपति श्री विद्यागणपति संवादाग्र्यमृतरुद्रा देवताः।

ऐं बीजं ह्रीं शक्तिः श्रीं कीलकम्। महात्रिपुरसुन्दरी महागणपति विद्यागणपति संवादाग्र्यमृतरुद्र प्रसादसिद्ध्यर्थे वाञ्छाकल्पलता महामन्त्र जपे विनियोगः।

करन्यासः- ओं ह्रीं श्रीं ऐं क्लीं सौः ह्रीं (७)

७ सर्वज्ञायै ह्रां गां ब्रह्मात्मने अंगुष्ठाभ्यां नमः।
७ नित्यतृप्तायै ह्रीं गीं विष्ण्वात्मने तर्जनीभ्यां नमः।
७ अनादिबोधायै ह्रूं गूं रुद्रात्मने मध्यमाभ्यां नमः।
७ सर्वस्वतन्त्रायै ह्रैं गैं ईश्वरात्मने अनामिकाभ्यां नमः।
७ नित्यमलुप्तशक्तये ह्रौं गौं सदाशिवात्मने कनिष्ठिकाभ्यां नमः।
७ अनन्तायै ह्रः गः सर्वात्मने करतलकरपृष्ठाभ्यां नमः।

हृदयादिन्यासः-

७ सर्वज्ञायै ह्रां गां ब्रह्मात्मने हृदयाय नमः।
७ नित्यतृप्तायै ह्रीं गीं विष्ण्वात्मने शिरसे स्वाहा।
७ अनादिबोधायै ह्रूं गूं रुद्रात्मने शिखायै वषट्।
७ सर्वस्वतन्त्रायै ह्रैं गैं ईश्वरात्मने कवचाय हुं।
७ नित्यमलुप्तशक्तये ह्रौं गौं सदाशिवात्मने नेत्रत्रयाय वौषट्।
७ अनन्तायै ह्रः गः सर्वात्मने अस्त्राय फट्।

भूर्भुवस्सुवरोम् (दिग्बन्धः)

ध्यानम् -

द्वाभ्यां विभ्राजमानं धृतकलशमहाशृंखलाभ्यां भुजाभ्यां
बीजापूरादि बिभ्रद्दशभुजमरुणं नागभूषं त्रिणेत्रम्।
सन्ध्यासिन्दूरवर्णं स्तनभरनमितं तुन्दिलं चन्द्रचूडं
कण्ठादूर्ध्वं करीन्द्रं युवतिमयमधो नौमि विद्यागणेशम्॥

धवलनलिनराजच्चन्द्रमध्ये निषण्णं
करविकसितपाशं सांकुशं साभयं च।
सवरममलमग्निं क्षीरगौरं त्रिणेत्रं
प्रणमत शुभवक्रं दिक्षु संवादयन्तम्॥

हेमाद्रौ हेमपीठस्थितिममरगणैरीड्यमानां विराजत्
पुष्पेष्विष्वास पाशांकुशकरकमलां रक्तवस्त्रां त्रिणेत्राम्।
दिक्षूद्यद्भिश्चतुर्भिर्मणिमयकलशैः पञ्चशक्त्यन्वितैः स्व
वृक्षैः क्लृप्ताभिषेकां भजत भगवतीं भूतिदामन्त्ययामे॥

बीजापूरगदेक्षु कार्मुकरुजाचक्राब्ज पाशोत्पल
व्रीह्यग्र स्वविषाण रत्नकलशप्रोद्यत्करांभोरुहः।
पायाद्वल्लभया सपद्मकरया श्लिष्टो ज्वलद्भूषया
विश्वोत्पत्ति विपत्ति संस्थितिकरो विघ्नेश इष्टार्थदः॥

स्फुटितनलिनसंस्थं मौलिबद्धेन्दुरेखा गलदमृतरसार्द्रं चन्द्रवह्न्यर्कनेत्रम्।
स्वकरकलितमुद्रावेदपाशाक्षमालं स्फटिकरजतमुक्तागौरमीशं नमामि।

लमित्यादिपञ्चपूजाः

लं पृथिव्यात्मकं गन्धं समर्पयामि। (१-५)
हं आकाशात्मकं पुष्पं समर्पयामि। (५-१)
यं वाय्वात्मकं धूपमाघ्रापयामि। (५-४)
रं अग्न्यात्मकं दीपं दर्शयामि। (५-३)

वं अमृतात्मकं अमृतोपहारं निवेदयामि ॥ (५-२)

श्रीविद्यागणपतिमूलमन्त्रजपः -

ओं श्रीं ह्रीं क्लीं ग्लौं गं ऐं कएईलह्रीं तत्सवितुर्वरेण्यं
गणपतये क्लीं हसकहलह्रीं भर्गो देवस्य धीमहि
वरवरद सौः सकलह्रीं धियो यो नः प्रचोदयात्
सर्वजनं मे वशमानय स्वाहा। (१०८ वारम्)

प्रथमः पर्यायः -

१. ओं ऐं ह्रीं श्रीं लं क्लीं ग्लौं गं गुंग्ल्रीं श्रीं कएईलह्रीं हसकहलह्रीं सकलह्रीं ऐं क्लीं सौः- (२९) यदद्य कच्च + ते वशे ॥ ओं गं क्षिप्रप्रसादनाय गणपतये वरवरद आं ह्रीं क्रों सर्वजनं मे वशमानय स्वाहा सौः क्लीं ऐं (३७)।

२. ओं ऐं ह्रीं श्रीं.. (२९) तत्सवितुर्वरेण्यं - प्रचोदयात्। ओं गं क्षिप्र..(३७)

३. ओं ऐं ह्रीं श्रीं... (२९) त्र्यंबकं + मामृतात्। ओं गं क्षिप्र... (३७)

४. ओं ऐं ह्रीं श्रीं... (२९) जातवेदसे + दुरितात्यग्निः ॥ ओं गं क्षिप्र..(३७)

५. ओं ऐं ह्रीं श्रीं..(२९) समानो + जुहोमि ॥ ओं गं क्षिप्र.. (३७)

६. ओं ऐं ह्रीं श्रीं... (२९) सं समिद्युवसे + वसून्या भर ॥ ओं गं क्षिप्र (३७)

७. ओं ऐं ह्रीं श्रीं (२९) समानो + जुहोमि। ओं गं क्षिप्र... (३७)

८. ओं ऐं ह्रीं श्रीं (२९) जातवेदसे + त्यग्निः। ओं गं क्षिप्र... (३७)

९. ओं ऐं ह्रीं श्रीं (२९) त्र्यंबकं + मामृतात्। ओं गं क्षिप्र... (३७)

१०. ओं ऐं ह्रीं श्रीं (२९) तत्सवितुः + प्रचो दयात्। ओं गं क्षिप्र... (३७)

११. ओं ऐं ह्रीं श्रीं (२९) यदद्य + वशे। ओं गं क्षिप्र... (३७)

१२. ओं ऐं ह्रीं श्रीं (२९) गणानां त्वा + सादनम्। ओं गं क्षिप्र... (३७)

१३. ओं भूः भद्रं नो अपि वातय मनः ॥

ओं ह्रीं वं ठं अमृतरुद्राय आंह्रीक्रों प्रतिकूलं मे नश्यतु।
अनुकूलं मे वशमानय वशमानय स्वाहा।
दमयन्तीनलाभ्यां च नमस्कारं करोम्यहम्।
अविवादो भवेदत्र कलिदोषप्रशान्तये॥
ऐकमत्यं भवेदेषां ब्राह्मणानां पृथग्धियाम्।
निर्वैरता च जायेत संवादाग्रे प्रसीद मे॥

द्वितीयः पर्यायः।

१. ओं ऐं ह्रीं श्रीं (२९) यदद्य + वशे। ओं गं क्षिप्र (३७)
२. ओं ऐं ह्रीं श्रीं (२९) तत्सवि + चोदयात्। ओं गं क्षिप्र (३७)
३. ओं ऐं ह्रीं श्रीं (२९) त्र्यंबकं + मामृतात्। ओं गं क्षिप्र (३७)
४. ओं ऐं ह्रीं श्रीं (२९) जातवेदसे + त्यग्निः। ओं गं क्षिप्र (३७)
५. ओं ऐं ह्रीं श्रीं (२९) समानो + जुहोमि। ओं गं क्षिप्र (३७)
६. ओं ऐं ह्रीं श्रीं (२९) संगच्छध्वं + उपासते। ओं गं क्षिप्र (३७)
७. ओं ऐं ह्रीं श्रीं (२९) समानो मन्त्रः + जुहोमि। ओं गं क्षिप्र (३७)
८. ओं ऐं ह्रीं श्रीं (२९) जातवेदसे + त्यग्निः। ओं गं क्षिप्र (३७)
९. ओं ऐं ह्रीं श्रीं (२९) त्र्यंबकं + मामृतात्। ओं गं क्षिप्र (३७)
१०. ओं ऐं ह्रीं श्रीं (२९) तत्सवितुः + चोदयात्। ओं गं क्षिप्र (३७)
११. ओं ऐं ह्रीं श्रीं (२९) यदद्य + वशे। ओं गं क्षिप्र (३७)
१२. ओं ऐं ह्रीं श्रीं (२९) अग्ने मन्युं + विनेशत्। ओं गं क्षिप्र (३७)
१३. ओं भुवः मरुतामोजसे स्वाहा। ओं ह्रीं वं ठं + वशमानय स्वाहा। दमयन्ती + प्रसीद मे॥

तृतीयः पर्यायः

१. ओं ऐं ह्रीं श्रीं (२९) यदद्य + वशे। (३७)
२. (२९) तत्सवितुः + चोदयात्। (३७)
३. (२९) त्र्यंबकं + मामृतात्। (३७)

४. (२९) जातवेदसे + त्यग्निः। (३७)
५. (२९) समानोमन्त्रः + जुहोमि। (३७)
६. (२९) समानोमन्त्रः + जुहोमि। (३७)
७. (२९) समानो मन्त्रः + जुहोमि। (३७)
८. (२९) जातवेदसे + त्यग्निः। (३७)
९. (२९) त्र्यंबकं + मामृतात्। (३७)
१०. (२९) तत्सवितुः + चोदयात्। (३७)
११. (२९) यदद्य + वशे। (३७)
१२. (२९) यो माग्ने + स्वाहा। (३७)
१३. ओं स्वः इन्द्रो विश्वस्य राजति।
ओं ह्रीं वं ठं अमृत + स्वाहा।
दमयन्ती + प्रसीद मे॥

चतुर्थः पर्यायः

१. (२९) यदद्य + वशे। (३७)
२. (२९) तत्सवि + चोदयात्। (३७)
३. (२९) त्र्यंबकं + मामृतात्। (३७)
४. (२९) जातवेदसे + त्यग्निः। (३७)
५. (२९) समानो मन्त्रः + जुहोमि। (३७)
६. (२९) समानी + सुसहासति। (३७)
७. (२९) समानो मन्त्रः + जुहोमि। (३७)
८. (२९) जातवेदसे + त्यग्निः। (३७)
९. (२९) त्र्यंबकं + मामृतात्। (३७)
१०. (२९) तत्सवितुः + चोदयात्। (३७)
११. (२९) यदद्यकच्च + वशे। (३७)
१२. (२९) अजैष्माद्यासनाम + तंमृच्छतु। (३७)
१३. (२९) ओं भूर्भुवस्स्वः। शन्नो अस्तु द्विपदे शं चतुष्पदे।

ओं ह्रीं वं ठं अमृत + स्वाहा। दमयन्ती + प्रसीदमे ॥

पुनः हृदयादिन्यासं भूर्भुवस्सुवरों इति दिग्विमोकं ध्यानं लमित्यादिपञ्च पूजाश्च कृत्वा गुह्यातिगुह्यगोप्ता त्वं गृहाणात्मकृतं जपम्। सिद्धिर्भवतु देवेश त्वत्प्रसादान्मयिस्थिरा। इति जपं देवाय समर्पयेत्।

(अनेन श्रीवाञ्छाकल्पलतामन्त्रावर्तनेन महात्रिपुरसुन्दरी - महागणपति - संवादाऽयमृतरुद्राः प्रीयन्ताम् इति, भगवान्सर्वात्मकः महाषोढा (डशी) शिवकल्पकवल्लर्यम्बासमेत शिवाग्नीश्वरः प्रीयताम्। तत्सद् ब्रह्मार्पणमस्तु इति वा जपार्पणम्।)

अत्र विशेषाः -

१. वेदर्चामपि छन्दसां ऋषीणां मननं कैश्चित् क्रियते। ध्यानानन्तरं शंख - चक्र - धनुर्योनि - धेन्वङ्कुश - पाश - सुमुख क्षोभणाख्या नव मुद्राः प्रदर्श्यन्ते।

२. ओं श्रीं ह्रीं क्लीं ग्लौं गं ऐं कएईलह्रीं तत्सवितुर्वरेण्यं गणपतये क्लीं हसकहलह्रीं भर्गो देवस्य धीमहि वरवरद सौः सकलह्रीं धियो योनः प्रचोयात् इति श्रीविद्यागणपति मन्त्रः। श्रीमहागणपति - बाला - पञ्चदशी - गायत्रीमन्त्राणां संपुटनेन संपन्नः। अत्र बालां गायत्रीं च केचन न योजयन्ति। सकलह्रीं श्रीं इति षोडश्या योगः कैश्चित्क्रियते।

३. वाञ्छाकल्पलता मन्त्रे द्वौ भागौ स्तः। पूर्वभागः २९ अक्षरात्मकः, उत्तरभागः ३७ अक्षरात्मकः। पूर्वभागस्तु ओं ऐं ह्रीं श्रीं लं क्लीं ग्लौं गं गुं ग्लूरीं श्रीं क ए ई ल ह्रीं हसकहलह्रीं सकलह्रीं ऐं क्लीं सौः इति (२९) इति संख्यया संज्ञातः। मध्ये वेदमन्त्रः। उत्तरभागस्तु ओं गं क्षिप्रप्रसादनाय गणपतये वर वरद आं ह्रीं क्रों सर्वजनं मे वशमानय स्वाहा सौः क्लीं ऐं इति (३७) इति संख्यया संज्ञातः। अत्र गुं ग्ल्रीं इत्यस्य स्थाने गगलरीं इति गुगुलरीं इति गुगुरीं इति च संप्रदाय भेदोऽस्ति।३७ अक्षरघटितोत्तर भागस्य स्थाने ओं गं क्षिप्रप्रसादनाय नमः इति पठन्ति।

४. पर्यायान्ते ओं ह्रीं वं ठं इत्याद्यमृतरुद्रमन्त्रभागस्थाने ओं श्रीं ह्रीं क्लीं कल्पलते ममाभीष्टफलं देहि। प्रतिकूलं मे नश्यतु अनुकूलं मे अस्तु इति पठन्ति।

५. प्रत्यहं निशाया अन्तिमे यामे ब्राह्मे मुहूर्ते सूर्योदयात्प्राक् चतुर्वारं पठनं क्रियते । विजयदशमीदिने ब्राह्ममुहूर्ते होमश्च । श्रीविद्यागणपतिरेव वाञ्छाकल्पलतागणपतिरिति तस्यैवो पास्त्यन्तरमेतदिति वृद्धाः । श्रीविद्यया गणपतिविद्यया गायत्र्या, इन्द्र त्र्यंबकदुर्गा संवननदि मन्त्रैश्च संपुटितोऽयं कल्पः सर्वाभीष्टप्रदः । हरदत्ताचार्यः भगवतोऽग्नीश्वरस्य भक्तः एतत्संप्रदायस्य गुरुः । तदनुयायिनः अद्य यावन्मन्त्रेणानेन श्रीविद्यागणपतिं आराधयन्तीति गुरुनाथाः ।

संप्रदायो भिद्यते । आचरणे स्वस्वगुरव एव प्रमाणं, न पुस्तकानि । दिग्दर्शनमेव पुस्तकैः क्रियते ।

## वाञ्छाकल्पलताक्रमे अनुसन्धीयमाना वेदमन्त्राः

१. यदद्य कच्च वृत्रहन्नुदगा अभिसूर्य ।
सर्वं तदिन्द्र ते वशे (ऋ ८-९३-४)

२. तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ।
धियो यो नः प्रचोदयात् । ऋ ३-६२-१०, तै १-५-६

३. त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् । ऋ ७-५९-१२

४. जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः।
स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥
ऋ १.९९-१ तै १-८-६.

५. समानो मन्त्रस्समितिः समानी समानं मनस्सह चित्तमेषाम् ।
समानं मन्त्रमभि मन्त्रये वस्समानेन वो हविषा जुहोमि ॥
ऋ१०-१९१-३

६. सं समिद्युवसे वृषन्नग्ने विश्वान्यर्य आ ।
इळस्पदे समिध्यसे सनो वसून्याभर ॥ ऋ १०-१९१-१

७. सङ्गच्छध्वं संवदध्वं सं वो मनांसि जानताम् ।
देवा भागं यथा पूर्वे सञ्जानाना उपासते ॥ ऋ १०-१९१-२

८. समानीव आकूतिस्समाना हृदयानि वः ।
समानमस्तु वो मनो यथा वस्सुसहासति ॥ ऋ १०-१९१-४

९. गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम् ।
ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पते आनः शृण्वन्नूतिभिस्सीद सादनम् ।
ऋ २.२३ तै २.३.१४

१०. अग्ने मन्युं प्रतिनुदन्परेषामदब्धो गोपाः परिपाहि नस्त्वम् ।
प्रत्यञ्चो यन्तु निगुतः पुनस्ते३मैषां चित्तं प्रबुधां विनेशत् ॥
ऋ १०.१२८.६ तै ४.७.१४

११. यो माग्ने भागिनं सन्तमथाभागं चिकीर्षति ।
अभागमग्ने तं कुरु मामग्ने भागिनं कुरु स्वाहा ।

१२. अजैष्माद्यासनाम चाभूमानागसो वयम् ।
जाग्रत्स्वप्नः सङ्कल्पः पापो यं द्विष्मस्तं स ऋच्छतु यो नो द्वेष्टि
तमृच्छतु ॥ ऋ १०-१६४-५

ओं भूः भद्रं नो अपि वातय मनः । ऋ १०-२१-१
मरुतामोजसे स्वाहा । तै १.८.१५
इन्द्रो विश्वस्य राजति ।
शन्नो अस्तु द्विपदे शं चतुष्पदे ।
(वेदमन्त्रा विधिना सस्वरमधीताः फलदाः ।)

## वाञ्छाकल्पलताक्रमः

''बालां प्रथममुच्चार्य संबुध्य सुंदरीं वदेत् ।
ह्रीमुक्त्वानुक्रमेणैव सर्वज्ञायै वदेत्ततः ॥ १ ॥
बालायाः शक्तिभिः षड्भिराद्यायैः ह्रीमिति प्रिये ।
दीर्घसंयुक्त गं बीजैः पंचभिः ब्रह्मभिः क्रमात् ॥ २ ॥
सर्वात्मने च देवेश कुर्यान्नित्यषडंगकम् ।
वाञ्छितार्थप्रसिद्ध्यर्थं विनियोगः प्रकीर्तितः ॥ ३ ॥

हेमाद्राविति तां ध्यायेच्छ्रीमत्त्रिपुरसुंदरीम्।
बीजापूरेति विघ्नेशं धवलेत्यादिनापि च ॥ ४ ॥

द्वाभ्यामित्यादि यद्ध्यानं पूर्णध्यानं तदुच्यते।
एवं ध्यात्वा सूक्तभेदान् ऋग्भेदानपि च साधकः ॥ ५ ॥

वह्निजायान्तमुक्त्वाऽथ नलसूक्तं वदेत्ततः।
जपित्वैवं चतुर्वारं एकावृत्तिर्भवेत्तदा।
अष्टवारं जपेन्नित्यमष्टसिद्धिर्भविष्यति ॥ ६ ॥

प्रणवादि यदद्येति गायत्री त्र्यंबकं तथा।
एवमारोहरूपोऽयमवरोहस्तयोच्यते ॥ ७ ॥

समानो मंत्रमारभ्य यदद्येति ऋगं ऋचम्।
आरोहे तु द्वितीयस्य दलस्यापि तथोच्यते ॥ ८ ॥

संगच्छेति वदेदष्टौ अवरोहः समानकः।
अत्रापि द्वादशस्थाने अग्ने मन्युं वदेन्मनुम् ॥ ९ ॥

द्वितीयां व्याहृतिं प्रोच्य मरुतामोजसे वदेत्।
समानो तत्र मंत्रादि द्वादशे योजयेत् तथा ॥ १० ॥

योमाग्ने मंत्रं जपित्वा वह्निजायां तमावदेत्।
तृतीयां व्याहृतिं ब्रूयात् "इन्द्रो विश्वस्य राजति" ॥ ११ ॥

दलस्यापि चतुर्थस्य षष्ठस्थाने तथा वदेत्।
समानीव ऋचं ब्रूयादजैष्माद्यासनाम च ॥ १२ ॥

ऋचं त्वंते जपित्वा तु व्याहृतित्रितयं वदेत्।
ततः शं नो भव ब्रूयात् द्विपदे शं चतुष्पदे ॥ १३ ॥

उत्तरं दलमप्यत्र योजनीयं चतुर्मुख।
जपित्वा साधकश्रेष्ठ चतुर्वारं पृथक् पृथक् ॥ १४ ॥

(विद्यागणपतिरहस्ये)

फलश्रुतिः

निशान्ते तु प्रतिदिनं चतुर्वारं पठेद्यदि।
सर्वैश्वर्यं भवेत्सर्वं वेदपाठफलं भवेत्॥ १॥

वाञ्छाकल्पलतायास्तु न होमो न च तर्पणम्।
स्मरणादेव विद्याया मुक्तो भवति पुरुषः॥ २॥

आवर्तनत्रये लक्ष्मीं पञ्चावर्तं जगद्वशे।
दशावृत्तौ शिवादीनां देवानां भक्तिभाग्भवेत्॥ ३॥

लक्षावृत्तौ सार्वभौमो दरिद्रोऽपि भवेन्नरः।
नार्थवादोऽथर्वणस्य वसिष्ठवचनं यथा॥ ४॥

(श्री अथर्वणरहस्ये उत्तरभागे)

## श्री वाञ्छाकल्पलता लघुः क्रमः।

१. ओं ऐं ह्रीं श्रीं गं गगगलह्रीं ऐं कएईलह्रीं क्लीं हसकहलह्रीं सौः सकलह्रीं गं क्षिप्रप्रसाद न गणपतये वर वरद आं ह्रीं क्रों सर्वजनं मे वशमानय स्वाहा। (५९) गणानां त्वा + सादनम्।

२. ऐं ह्रीं श्रीं + स्वाहा। (५९) ओं ऐं ह्रीं श्रीं यदन्ति यच्च दूरके भयं विन्दति मामिह। पवमान वितज्जहि। यदुत्थितं भगवति तत्सर्वं शमय स्वाहा।

३. ऐं ह्रीं श्रीं + स्वाहा। (५९) ओं तत्सवितुः + प्रचोदयात्।

४. ऐं ह्रीं श्रीं + स्वाहा। (५९) त्रियम्बकं + माऽमृतात्।

५. ऐं ह्रीं श्रीं + स्वाहा। (५९) जातवेदसे + दुरितात्यग्निः।

६. ऐं ह्रीं श्रीं + स्वाहा। (५९)

(वनदुर्गोपनिषदि)

## गणपतिदीक्षाविधानम्

मुद्गल उवाच ।

अथ शृणु महाभाग गाणपत्यस्वरूपकम् ।
येन त्वं गाणपत्ये वै पदे च निपुणो भवेः ॥ १ ॥

नरो गणेशभक्तिं यः कर्तुं समुद्यतो भवेत् ।
गणेशप्रीतिकामार्थं दीक्षा ग्राह्या च तेन वै ॥ २ ॥

गाणपत्यं सुशान्तिस्थं गुरुं वेदार्थपारगम् ।
नत्वा तं च वदेत्पूर्वं दीक्षां देहि महाप्रभो ॥ ३ ॥

त्वमेव गणराजोऽसि गाणपत्यपरायणः ।
मां कुरुष्व महाभाग गाणपत्यं सुशीलकम् ॥ ४ ॥

एवं पृष्टो गुरुस्तत्र शिष्यं दृष्ट्वा सुशीलकम् ।
श्रौतस्मार्तक्रियायुक्तं गणेशे भावलालसम् ॥ ५ ॥

ततस्तं शिक्षयेदादौ धर्मान् गाणेशकान् प्रभो ।
तान्स्तुभ्यं कथयामि वै शृणु सर्वसुखप्रदान् ॥ ६ ॥

परान्नं भक्षयेन्नैव नालोकयेद्रजस्वलाम् ।
परस्त्रीगमनं नैव कुर्याच्च मनसापि सः ॥ ७ ॥

स्वार्थापक्रोधसंयुक्तो न भवेल्लोभसंयुतः ।
अभक्ष्यभक्षणं नैव कुर्याद्हिंसां कदापि न ॥ ८ ॥

गुरुद्रोहं च पैशुन्यं ज्येष्ठानामपमानकम् ।
वेदशास्त्रादिमार्गेषु हीनं नैव समाचरेत् ॥ ९ ॥

इहामुत्र विरक्तः स भवेद्ब्रह्मपरायणः ।
इत्यादिविविधान् धर्मानुपदिश्य मनुं दिशेत् ॥ १० ॥

आदौ कृच्छ्रादिकं तस्मै दापयेच्च ततः परम् ।
गाणपत्यान् समाज्ञाप्य सुदिनमवलोकयेत् ॥ ११ ॥

अथवा गणराजस्य सर्वदा च तिथिर्भवेत्।
चतुर्थीं शुक्लपक्षस्थां कृष्णां वा समलोकयेत्॥ १२॥
गणेशप्रियकालं वा समालोक्य स्वसिद्धिदः।
गुरुः शिष्याय मन्त्रं वै दद्याद्भक्त्यार्थमादरात्॥ १३॥
तत्र विधिं शृणु दक्ष कथयामि सुखप्रदम्।
शुचौ मण्डपिकां कृत्वा भूमौ तत्रावलेपयेत्॥ १४॥
गोमयेन ततस्तत्र वेदीं कुर्याद्विचक्षणः।
चतुरस्रां च तस्यां वै कोणेषु स्थापयेद्घटान्॥ १५॥
मध्ये गणेशयन्त्रं च कुङ्कुमेनैव कारयेत्।
तत्र विघ्नेश्वरं स्थाप्य पूजयेद्विधिपूर्वकम्॥ १६॥
दीक्षायुक्तांश्च गाणेशान्पूजयेत्स ततः परम्।
तेभ्यो भूषणवस्त्रादीन् दापयेच्छाद्यवर्जितः॥ १७॥
गाणेशेनैव मन्त्रेण जपं सत्कारयेत्तु तैः।
पुरश्चरणसंख्याकमथवा लक्षमेव च॥ १८॥
अथवा दशसाहस्रमथवा च सहस्रकम्।
तद्दशांशेन होमं वै कुर्यात्तत्र महामतिः॥ १९॥
ततो बलिप्रदानं वै कुर्यात् पूर्णाहुतिं ततः।
पुनस्सम्पूज्य विघ्नेशं ततो गुरुं प्रणम्य सः॥ २०॥
प्रार्थयेत्सर्वभावेन शिष्यं मां तारय प्रभो।
मन्त्रं देहि महाभाग गाणपत्यं विशेषतः॥ २१॥
आदौ गुरुं समभ्यर्च्य ततो गाणेशकान्पुनः।
नमेत्क्षमापयेत्तान्वै शीलयुक्तो महायशाः॥ २२॥
पुनर्गुरुं समभ्यर्च्य ततश्च कलशं पुरः।
स्थापयेत्तं ततः पूज्य वारुणेनैव मन्त्रतः॥ २३॥

तत्र विघ्नेश्वरं ध्यात्वा पूजयेच्च स्वमार्गतः ।
ततो वस्त्रं समाच्छाद्य मस्तके गुरुसंयुतः ॥ २४ ॥

प्रणम्य स्वगुरुं तत्र प्रार्थयेद्वेदमन्त्रकं ।
संसारतरणार्थाय देहि मन्त्रं द्विजोत्तम ॥ २५ ॥

एवं गुरुर्महर्षिश्च प्रार्थितस्तं सुशिक्ष्य वै ।
गणेशं मनसा ध्यात्वा मन्त्रं शिष्याय दापयेत् ॥ २६ ॥

ततः कलशकं गृह्य तत्र छात्रं प्रकारयेत् ।
अष्टोत्तरशतं मन्त्रं जपन् तं स्नापयेद्गुरुः ॥ २७ ॥

स्नातं शिष्यं समादाय गणेशं प्रणिपत्य च ।
शिष्येणं पूजयेद्देवं ततस्तं स विसर्जयेत् ॥ २८ ॥

गाणपत्यांश्च प्रणमेद्दद्याच्च दक्षिणां ततः ।
पुष्कलां शाठ्यहीनः स भोजयेत्तान् महायशाः ॥ २९ ॥

मोदकापूपलड्डूक पायसान्नैर्महामते ।
सूक्ष्मतन्दुलसंयुक्तैर्नानापकान्नमिश्रितैः ॥ ३० ॥

यथेष्टं भोजयित्वा वै प्रणमेत्स पुनः पुनः ।
प्रार्थयेत्तान् विशेषेण तारितोऽहं भवार्णवात् ॥ ३१ ॥

सम्भारं गुरवे दद्याद्गुरुवंशं नमेत्सदा ।
गाणपत्यान् प्रहृष्यैवोच्छ्रायितांश्च नमेत्स तु ॥ ३२ ॥

गाणपत्यान्समालोक्य न नमेद्यः प्रजापते ।
तेन विघ्नेश्वरः साक्षाद्धिंसितो नात्र संशयः ॥ ३३ ॥

एवं दीक्षां समागृह्य गणेशं पूजयेत्सदा ।
तत्समीपे तु मन्त्रस्य पुरश्चरणकं चरेत् ॥ ३४ ॥

अथ धर्मान्प्रवक्ष्यामि शृणु तान्सुसमाहितः ।
दन्तकाष्ठमभुक्त्वा तु न गच्छेद्गणपालयम् ॥ ३५ ॥

मैथुनं यस्तु कृत्वा चेद्देवालयं गमिष्यति।
स सद्यो भ्रंशमायाति ह्यतः स्नात्वा च तं व्रजेत्॥ ३६॥
अशुचिवस्त्रसंयुक्तो विघ्नेशं नैव संस्पृशेत्।
परवस्त्रधरः सोऽपि पूजयेन्न गणाधिपम्॥ ३७॥
छिद्रयुक्तं न वस्त्रं स धारयेद्देवपूजने।
मौनेन पूजयेद्देवं यथाविधि गणेश्वरं॥ ३८॥
गणेशपूजने सक्तो यदि वाचं वदेन्नरः।
पूजान्तरायदोषेण विघ्नयुक्तो भवेन्नरः॥ ३९॥
अभ्यङ्गसंयुतो यस्तु स्नानहीनो यदि भवेत्।
देवालयं यदा गच्छेत्तदा भ्रंशमवाप्नुयात्॥ ४०॥
उपानत्स्पर्शयुक्तः पादक्षालनवर्जितः।
गणेशालयं गच्छन्वै विघ्नयुक्तो भवेन्नरः॥ ४१॥
गन्धादिचर्चितो भूत्वा ह्यनर्च्य गणनायकम्।
देवालयं गतो दैवाद्भ्रंशं लभेत्तु मानवः॥ ४२॥
अजीर्णदोषसंयुक्तो यस्तिष्ठेद्देवसन्निधौ।
उद्गाराधस्समीरेण विघ्नयुक्तो भवेत्तु सः॥ ४३॥
भेरीशब्दमवाद्यैव गणेशालयगो भवत्।
स भ्रंशं च लभेद्दक्ष देवगुह्यप्रभञ्जनात्॥ ४४॥
देवालयं समागत्यानृतवाचं वदेन्नरः।
अथवा देवस्तुत्यादिहीनां स भ्रंशतामियात्॥ ४५॥
नित्यं तत्र प्रजानाथ संयतो देवसन्निधौ।
मर्यादां पालयंस्तिष्ठन्स ईप्सितफलं लभेत्॥ ४६॥
यथाशास्त्रविचारेण गणेशं सर्वसिद्धिदम्।
भजेच्च गाणपत्यस्तं स गणेशो भवेन्नरः॥ ४७॥
इति श्रीमुद्गलपुराणे पञ्चमखण्डे गाणपत्यदीक्षावर्णनं नाम त्रयोविंशति
तमोऽध्यायः॥

ओं श्री महागणपतये नमः।

## ४. नित्याह्निकक्रमः -

### १. गुरु वन्दनम् -

ओं ब्रह्माद्यशेषगुरुपारंपर्यक्रमेण स्वगुरुपादाम्बुजं यावत्प्रणमामि। ओं गुं गुरुभ्यो नमः। ओं पं परमगुरुभ्यो नमः। ओं पं परमेष्ठिगुरुभ्यो नमः। ओं पं परापरगुरुभ्यो नमः। ओं श्रीशिवाय गुरवे नमः। ओं श्रीदक्षिणामूर्तये नमः। ओं समस्त गुरुमण्डलरूपिणे श्री महागणपतये नमः।

श्रीनाथादि गुरुत्रयं गणपतिं पीठत्रयं भैरवं
सिद्धौघं बटुकत्रयं पदयुगं दूतीक्रमं मण्डलम्।
वीरान्द्व्यष्ट चतुष्क षष्टि नवकं वीरावली पञ्चकं
श्रीमन्मालिनि मन्त्रराज सहितं वन्दे गुरोर्मण्डलम्।
गुरुर्ब्रह्मा गुरुर्विष्णु र्गुरुर्देवो महेश्वरः।
गुरुः साक्षात्परं ब्रह्म तस्मै श्रीगुरवे नमः॥
अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः॥
गुरवे सर्वलोकानां भिषजे भवरोगिणाम्।
निधये सर्वविद्यानां दक्षिणामूर्तये नमः॥
श्रीगुरो दक्षिणामूर्ते भक्तानुग्रहदायक।
अनुज्ञां देहि भगवन् गणेशयजनाय मे॥
वन्दे गुरुपदद्वन्द्वं अवाङ्मनसगोचरम्।
रक्तशुक्ल प्रभामिश्रं अतर्क्यं त्रैपुरं महः॥
तव तत्त्वं न जानामि तदमेयं धिया मम।
अनीदृशस्त्वं प्रथितः तादृशे ते गुरो नमः॥

ओं नमो ब्रह्मादिभ्यो ब्रह्मविद्यासंप्रदायकर्तृभ्यो वंशर्षिभ्यो नमो गुरुभ्यः। सर्वोपप्लवरहितप्रज्ञानघन प्रत्यगर्थो ब्रह्मैवाहमस्मि। सोऽहमस्मि ब्रह्माहमस्मि।

## நித்யாந்ஹிகமுறை

1. குருவந்தநம் -

ஓம் ப்ரஹ்மாத்யஸேஷ குரு பாரம்பர்ய க்ரமேண ஸ்வகுரு பாதாம்புஜம் யாவத்ப்ரணமாமி. ஓம் கு₃ம் குருப்ப்யோ நம: । ஓம் பம் பரம குருப்ப்யோ நம: । ஓம் பம் பரமேஷ்ட்டிகுருப்ப்யோ நம: । ஓம் பம் பராபர குருப்ப்யோ நம: । ஓம் ஸ்ரீஸிவாய குரவே நம: । ஓம் ஸ்ரீ தக்ஷிணா மூர்தயே நம: । ஓம் ஸமஸ்த குருமண்டல ரூபிணே ஸ்ரீ மஹாகணபதயே நம:

ஸ்ரீநாதாதிகுருத்ரயம் கணபதிம் பீடத்ரயம் பைரவம்
ஸித்தௌகம் வடுகத்ரயம் பதயுகம் தூதீக்ரமம் மண்டலம் ।
வீராந்த்வயஷ்ட சதுஷ்கஷஷ்டி நவகம் வீராவளீ பஞ்சகம்
ஸ்ரீமன் மாலினிமந்த்ர ராஜ ஸஹிதம் வந்தே குரோர் மண்டலம் ।।
குருர் ப்ரம்ஹா குருர் விஷ்ணுர் குருர் தேவோ மஹேஸ்வர: ।
குருஸ் ஸாக்ஷாத் பரம் ப்ரம்ஹ தஸ்மை ஸ்ரீ குரவே நம: ।।
அஜ்ஞா நதிமிராந்த்தஸ்ய ஜ்ஞாநாஞ்ஜநஸலாகயா ।
சக்ஷுருன் மீலிதம் யேந தஸ்மை ஸ்ரீகுரவே நம: ।।
குரவே ஸர்வலோகாநாம் பிஷஜே பவரோகிணாம் ।
நிதயே ஸர்வவித்யாநாம் தக்ஷிணா மூர்தயே நம: ।।
ஸ்ரீகுரோ தக்ஷிணாமூர்தே பக்தாநுக்ரஹ தாயக ।
அநுஜ்ஞாம் தேஹி பகவன் கணேஸயஜநாய மே ।।
வந்தே குருபதத்வந்த்வம் அவாங்மநஸ கோசரம் ।
ரக்தஸுக்ல ப்ரபா மிஸ்ரம் அதர்க்யம் த்ரைபுரம் மஹ: ।।
தவ தத்வம் நஜாநாமி ததமேயம் த்தியா மம ।
அநீத்ருஸஸ்த்வம் ப்ரதித: தாத்ருஸே தே குரோ நம: ।।

ஓம் நமோ ப்ரம்ஹாதிப்ப்யோ ப்ரம்ஹவித்யா ஸம்ப்ரதாய கர்த்ருப்ப்யோ வம்ஸர்ஷிப்ப்யோ நமோ குருப்ப்ய: । ஸர்வோபப்லவரஹித ப்ரஜ்ஞாந கந ப்ரத்யகர்த்தோ ப்ரம்ஹை வாஹம ஸ்மி । ஸோऽஹமஸ்மி ப்ரம்ஹாஹமஸ்மி ।

२. द्वारदेवतापूजा

(सपर्यास्थानं प्रविश्य द्वारस्य दक्षवामभागयोः ऊर्ध्वभागेच क्रमेण)

ओं श्रीं ह्रीं क्लीं भद्रकाल्यै नमः (दक्षभागे)

ओं श्रीं ह्रीं क्लीं भैरवाय नमः । (वामभागे)

ओं श्रीं ह्रीं क्लीं लम्बोदराय नमः (ऊर्ध्वं) (इति द्वारदेवताः पूजयेत् ।)

2. துவார தேவதை பூஜை -

(பூஜையிடத்தை அடைந்து துவாரத்தின் வலது புறத்திலும் இடது புறத்திலும் மேற்பக்கத்திலும் துவாரதேவதைகளைப் பின் வருமாறு வழிபடவேண்டும்.

ஓம் ஸ்ரீம் ஹ்ரீம் க்லீம் பத்ரகாள்யை நம: (வலதில்)

ஓம் ஸ்ரீம் ஹ்ரீம் க்லீம் பைரவாய நம: (இடதில்)

ஓம் ஸ்ரீம் ஹ்ரீம் க்லீம் லம்போதராய நம: (மேல்)

(பூஜை செய்வதற்கான ஆஸனத்தில் அமர்ந்து கொள்ள வேண்டும்.)

तत्त्वाचमनम् -

ओं गं आत्मतत्त्वं शोधयामि स्वाहा।

ओं गं विद्यातत्त्वं शोधयामि स्वाहा।

ओं गं शिवतत्त्वं शोधयामि स्वाहा।

ओं गं सर्वतत्त्वं शोधयामि स्वाहा। (इत्याचामेत्।)

3. தத்வாசமநம்-

ஓம் கம் ஆத்மதத்வம் ஶோதயாமி ஸ்வாஹா।
ஓம் கம் வித்யாதத்வம் ஶோதயாமி ஸ்வாஹா।
ஓம் கம் ஶிவதத்வம் ஶோதயாமி ஸ்வாஹா।
ஓம் கம் ஸர்வதத்வம் ஶோதயாமி ஸ்வாஹா।

என்று ஆசமனம் செய்யவும்

४. श्रीगुरुपादुका वन्दनम्

ओं श्रीं ह्रीं क्लीं, ऐं क्लीं सौः, ऐं ग्लौं, हंसः शिवः सोहं, स्वरूपनिरूपण हेतवे श्रीगुरवे नमः। ([१]... श्रीपादुकां पूजयामि नमः।)

ओं श्रीं ह्रीं क्लीं, ऐं क्लीं सौः, ऐं ग्लौं, सोहं हंसः शिवः, स्वच्छप्रकाश विमर्शहितवे श्रीपरमगुरवे नमः। ([१]... श्रीपादुकां पूजयामि नमः।)

ओं श्रीं ह्रीं क्लीं, ऐं क्लीं सौः, ऐं ग्लौं, हंसः शिवः सोऽहं हंसः, स्वात्माराम पञ्जरविलीनतेजसे श्रीपरमेष्ठिगुरवे नमः। ([१]... श्रीपादुकां पूजयामि नमः)

(इति मृगीमुद्रया शिरसि गुरुमुद्राभिः वामभुजे च श्री गुरुत्रयं प्रणमेत्।)

([1]स्वगुरु परमगुरु परमेष्ठिगुरु दीक्षानामान्यत्र योज्यानि यथा यथम्।)
ओं श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वर वरद सर्वजनं मे वशमानय स्वाहा (इति मूलमन्त्रेण गणपतिं योनिमुद्रया स्वदक्षभुजे प्रणमेत्।)

4. ஶ்ரீகுருபாதுகா வந்தநம்-

*ஓம் ஶ்ரீம் ஹ்ரீம் க்லீம், ஐம் க்லீம் ஸௌ:, ஐம் க்$_3$லௌம், ஹம்ஸஶ் ஶிவஸ்ஸோஹம் ஸ்வரூபநிரூபணஹேதவே*

*ஶ்ரீ குரவே நம: । ([1]...ஶ்ரீபாது காம் பூஜயாமி நம: ।)*

*ஓம் ஶ்ரீம் ஹ்ரீம் க்லீம், ஐம் க்லீம் ஸௌ:, ஐம் க்$_3$லௌம், ஸோऽஹம் ஹம்ஸஶ்ஶிவ: । ஸ்வச்ச்சப்ரகாஶ விமர்ஶ ஹேதவே ஶ்ரீபரமகுரவே நம: । ([1]...ஶ்ரீபாது காம் பூஜயாமி நம: ।)*

*ஓம் ஶ்ரீம் ஹ்ரீம் க்லீம், ஐம் க்லீம் ஸௌ:, ஐம் க்$_3$லௌம் ஹம்ஸஶ் ஶிவஸ்ஸோऽஹம் ஹம்ஸ:, ஸ்வாத்மாராம பஞ்ஜர விலீந தேஜஸே ஶ்ரீபரமேஷ்ட்டி குரவே நம: । ([1]...ஶ்ரீபாது காம் பூஜயாமி நம: ।)*

*(என மிருகீமுத்ரையால் சிரஸிலும் குருமுத்ரைகளால் இடதுகையிலும் குரு, பரமகுரு, பரமேஷ்டிகுரு என மூவரையும் வணங்கவேண்டும்.*

*1. இவ்விடத்தில் தனது குரு பரமகுரு பரமேஷ்டிகுரு இவர்களின் தீக்ஷா நாமத்தைச் சேர்த்துச் சொல்லவும்.*

*ஓம் ஶ்ரீம் ஹ்ரீம் க்லீம் க்3லௌம் கம் கணபதயே வரவரத ஸர்வஜநம் மே வஶமாநய ஸ்வாஹா (என மூலமந்திரத்தால் கணபதியை தன் வலது புஜத்தில் யோனிமுத்ரையால் வணங்கவும்.*

५. श्रीमहागणपति सन्ध्या

ओं मम हृदयकमले कर्णिकामध्ये उपविष्टं उद्यदरुण किरणकोटिपाटलं देवं महागणपतिं ध्यायामि। तेन परिप्लुष्टनिश्शेषदोषं, तत्प्रभया अरुणतनुं आत्मानं भावयामि। सवितृमण्डलमध्यगं महागणपतिं ध्यायामि। *तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि। तन्नो दन्ती प्रचोदयात्। ओं सवितृमण्डल मध्यगाय महागणपतये एषोऽर्घ्यः स्वाहा। (एवं त्रिः अर्घ्यं दद्यात्।) श्री महागणपतिमहामन्त्रजपः (२८-अथवा १०८ वारं)। ''अनेन श्रीमहागणपतिः प्रीयताम्।'' इति जपं देवाय समर्पयेत्।

5. ஶ்ரீமஹா கணபதி ஸந்த்த்யா

*மம ஹ்ருதயகமலே கர்ணிகாமத்த்யே உபவிஷ்டம் உத்யதருண கிரணகோடி பாடலம் தேவம் மஹாகணபதிம் த்த்யாயாமி। தேந பரிப்லுஷ்ட நிஃஶேஷதோஷம், தத்ப்ரபயா அருணதநும் ஆத்மாநம் பாவயாமி। ஸவித்ருமண்டலமத்த்யகம் மஹா கணபதிம் த்த்யாயாமி। *தத்புருஷாயவித்மஹே வக்ரதுண்டாய தீமஹி। தந்நோ தந்தி: ப்ரசோதயாத்। ஓம் ஸவித்ரு மண்டல மத்த்யகாய மஹாகணபதயே ஏஷோऽர் க்க்யஸ் ஸ்வாஹா। (என 3 தடவை அர்க்க்யம் விடவும். பின் ஶ்ரீமஹா கணபதி மந்திரஜபம் நியாஸங்களுடன் 28 அல்லது 108 தடவை செய்து) அநேந ஶ்ரீமஹா கணபதி: ப்ரீயதாம் (என்று ஜபத்தைப் பகவானிடம் அர்பணம் செய்யவும்)*

६. श्रीमहागणपति महामन्त्रजपक्रमः

सङ्कल्पः। ओं गुं गुरुभ्यो नमः। ओं शुक्लांबर + शान्तये। प्राणायामः (वैदिकः अथवा मूलमन्त्रेण त्रिवारमावृत्तेन) ममोपात्तसमस्त दुरितक्षय द्वारा श्री परमेश्वर प्रीत्यर्थं श्रीमहागणपति प्रसाद सिद्ध्यर्थं श्रीमहागणपति महामन्त्रजपं करिष्ये। (अप उपस्पृश्य)

अस्य श्रीमहागणपति महामन्त्रस्य, गणकः ऋषिः (शिरसि) निचृद् गायत्री छन्दः (मुखे) महागणपतिर्देवता (हृदये) ओं गं बीजं (दक्षिणभुजे) स्वाहा शक्तिः (वामभुजे) ओं ग्लौं कीलकम्। (नाभौ अथवा उरोमध्ये) श्री महागणपति प्रसाद सिद्ध्यर्थे [१]मूलमन्त्रजपे विनियोगः (सर्वाङ्गे - अथवा अञ्जलिना) ([१]चतुरावृत्तितर्पणे, महागणपति सपर्यायां, महागणपतिहोमे इति यथायोगं विनियोगः।)

करन्यासः - [२]ओं श्रीं ह्रीं क्लीं (४) ओं गां अंगुष्ठाभ्यां नमः। ४. श्रीं गीं तर्जनीभ्यां नमः। ४. ह्रीं गूं मध्यमाभ्यां नमः। ४. क्लीं गैं अनामिकाभ्यां नमः ४. ग्लौं गौं कनिष्ठिकाभ्यां नमः। ४. गं गः करतलपृष्ठाभ्यां नमः। (ओं इति ब्रह्मप्रणवः। श्रीं ह्रीं क्लीं इति महागणपति प्रणवाः। एषां योगोऽत्र ४ इति संज्ञया क्रियते।)



**श्री महागणपतिः**

भजे हृदब्जे शोणाङ्गं वामोत्सङ्गविभूषया ।
सिद्धलक्ष्म्या समाश्लिष्टपार्श्वं अर्धेन्दुशेखरम् ॥
वामाधः करतो दक्षाधः करान्तेषु पुष्करे ।
परिष्कृतं मातुलुङ्गगदा पुण्ड्रेक्षुकार्मुकैः ॥
शूलेन शङ्ख चक्राभ्यां पाशोत्पलयुगेन च ।
शालिमञ्जरिकास्वीयदन्ताञ्चल मणीघटैः ॥

ஸ்ரீ மஹாகணபதி

हृदयादिन्यासः - ४. ओं गां हृदयाय नमः । ४. श्रीं गीं शिरसे स्वाहा । ४. ह्रीं गूं शिखायै वषट् । ४. क्लीं गैं कवचाय हुं । ४. ग्लौं गौं नेत्रत्रयाय वौषट् । ४. गं गः अस्त्राय फट् ।

दिग्बन्धन्यासः- ओं भूर्भुवस्सुवरोम् ।

ध्यानम् -

बीजापूरगदेक्षु कार्मुकरुजा चक्राब्जपाशोत्पल
व्रीह्याग्रस्वविषाण रत्नकलशप्रोद्यत्करांभोरुहः ।
ध्येयो (पायाद्) वल्लभया सपद्मकरया श्लिष्टो ज्वलद्भूषया
विश्वोत्पत्ति विपत्तिसं स्थितिकरो विघ्नेश इष्टार्थदः ॥

अथवा[१]

ध्यायामि हृदि शोणाङ्गं वामोत्सङ्गविभूषया ।
सिद्धलक्ष्म्या समाश्लिष्टपार्श्वमर्धेन्दुशेखरम् ॥ १
वामाधः करतो दक्षाधःकरान्तेषु पुष्करे ।
परिष्कृतं मातुलुङ्ग गदा-पुण्ड्रेक्षुकार्मुकैः ॥ २
शूलेन शंखचक्राभ्यां पाशोत्पलयुगेन च ।
शालिमञ्जरिका - स्वीयदन्ताञ्चल - मणीघटैः ॥ ३
स्रवन्मदं च सानन्दं श्रीश्रीपत्यादिसंवृतम् ।
अशेषविघ्न विध्वंसनिघ्नं विघ्नेश्वरं भजे ॥ ४ इति ।

(१. चतुरावृत्तितर्पणे इदं ध्यानं कैश्चित् क्रियते । अत्र पद्मस्थाने शङ्खः करे ।)

लमित्यादि पञ्चपूजाः

४. लं पृथिव्यात्मने महागणपतये गन्धं कल्पयामि ।
४. हं आकाशात्मने महागणपतये पुष्पं कल्पयामि ।
४. यं वाय्वात्मने महागणपतये धूपं कल्पयामि ।
४. रं वह्न्यात्मने महागणपतये दीपं कल्पयामि ।

४. वं अमृतात्मने महागणपतये नैवेद्यं कल्पयामि।

४. सं सर्वात्म ने महागणपतये तांबूलं (सर्वोपचार पूजाः) कल्पयामि।

मूलमन्त्रः। ओं श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वर वरद सर्वजनं मे वशमानय स्वाहा॥ (१०८)

हृदयादिन्यासः। भूर्भुवस्सुवरोम् (इति दिग्विमोकन्यासः।) ध्यानम्। लमित्यादि पञ्चपूजाः।

समर्पणम्।

गुह्यातिगुह्यगोप्ता त्वं गृहाणात्मकृतं जपम्।
सिद्धिर्भवतु देवेश त्वत्प्रसादान्मयि स्थिरा॥
श्रीमहागणपत्यर्पणमस्तु॥ ओं तत्सत्। ब्रह्मार्पणमस्तु॥

6. ஸ்ரீமஹா கணபதி மஹாமந்திர ஜபமுறை

*கும் குருப்ப்யோ நம: । ஶுக்லாம்பர + ஶாந்தயே । பிராணாயாமம் (வைதிகம் அல்லது மூலமந்திரத்தை மூன்று தடவை ஜபித்து) - ஸங்கல்பம் - மமோபாத்த ஸமஸ்ததுரிதக்ஷயத்வாரா ஸ்ரீபரமேஶ்வர ப்ரீத்யர்த்தம் ஸ்ரீமஹா கணபதி ப்ரஸாதஸித்த்யர்த்தம் ஸ்ரீமஹாகணபதி மஹா மந்த்ரஜபம் கரிஷ்யே। (கையலம்பி)*

*அஸ்ய ஸ்ரீ மஹா கணபதி மஹா மந்த்ரஸ்ய - கணக: ருஷி: (சிரஸில்) நிச்ருத் காயத்ரீச் சந்த: (வாயில்) மஹா கணபதிர் தேவதா (இதயத்தில்) ஓம் கம் பீஜம் (வலது புஜத்தில்) ஓம் ஸ்வாஹா சக்தி: (இடது புஜத்தில்) ஓம் க்லௌம் கீலகம் (நாபியில் அல்லது நடு மார்பில்) ஸ்ரீ மஹா கணபதி ப்ரஸாத ஸித்த்யர்த்தே மூலமந்த்ர ஜபேவிநியோக:[1] (உடல் முழுவதும், அல்லதுகை கூப்பி) (1. சதுராவ்ருத்தி தர்பணே, மஹாகணபதி ஸபர்யாயாம், மஹாகணபதி ஹோமே என்றவாறு நோக்கத்திற்கேற்ப மாற்றிச் சொல்லலாம்.)*

*கரநியாஸம் - ஓம் ஸ்ரீம் ஹ்ரீம் க்லீம் ஓம் காம் அங்குஷ்ட்டாப்ப்யாம் நம: । 4. ஸ்ரீம் கீம் தர்ஜநீப்ப்யாம் நம: । 4. ஹ்ரீம் கூம் மத்த்யமாப்ப்யாம் நம: । 4. க்லீம் கைம் அநாமிகாப்ப்யாம் நம: । 4. க்லௌம் கௌம் கநிஷ்ட்டிகாப்ப்யாம் நம: । கம் க: கரதலகரப்ருஷ்ட்டாப்ப்யாம் நம: । ( ஓம் என்பது பிரும்ஹ*

*ப்ரணவம், ஸ்ரீம் ஹ்ரீம் க்லீம் என கணபதிபிரணவங்கள். இவற்றைச் சேர்த்துச் சொல்லவும் என்பதை 4. என்ற குறி உணர்த்தும்.)*

ஹ்ருதயாதிநியாஸம் *4. ஓம் கா₃ம் ஹ்ருதயாய நம: । 4. ஸ்ரீம் கீ₃ம் ஶிரஸே ஸ்வாஹா । 4. ஹ்ரீம் கூ₃ம் ஶிகாயை வஷட் । 4. க்லீம் கை₃ம் கவசாயஹு¬ம் । 4. க்₃லௌம் கௌ₃ம் நேத்ரத்ரயாய வௌஷட், 4. க₃ம் க₃: அஸ்த்ராயப்பட்*

திக்பந்த்தந்யாஸம் - ஓம் பூர்புவஸ் ஸு¬வரோம்.

தியானம்

*பீஜாபூர கதேக்ஷு¬கார்முக ருஜாசக்ராப்ஜபாஶோத்பல*
*வ்ரீஹ்யக்ர ஸ்வவிஷாண ரத்நகலஶப்ரோத்யத் கராம்ப்போருஹ:।*
*த்த்யேயோ (பாயாத்) வல்லபயா ஸபத்மகரயா ஶ்லிஷ்டோ ஜ்வலத்ப்பூஷயா*
*விஶ்வோத்பத்திவிபத்தி ஸம்ஸ்த்திகரோ விக்க்னேஶ இஷ்டார்த்தத: ॥*

*(அல்லது[1])*

*த்த்யாயாமி ஹ்ருதிஶோணாங்கம் வாமோத்ஸங்கவிபூஷயா।*
*ஸித்த்தலக்ஷ்ம்யா ஸமாஶ்லிஷ்டபார்ஶ்வமர்த்தேந்து ஶேகரம் ॥*
*வாமாத: கரதோ தக்ஷாத: கராந்தேஷு¬ புஷ்கரே।*
*பரிஷ்க்ருதம் மாதுலுங்க கதாபுண்ட்ரேக்ஷு¬ கார்முகை: ॥*
*சூலேந ஶங்க்க சக்ராப்ப்யாம் பாஶோத்பலயுகேந ச।*
*ஶாலிமஞ்ஜரிகா ஸ்வீயதந்தாஞ்சல மணீக்கடை: ॥*
*ஸ்ரவந்மதம் ச ஸாநந்தம் ஸ்ரீ ஸ்ரீபத்யாதிஸம் வ்ருதம்।*
*அஶேஷவிக்க்ந வித்த்வம்ஸ நிக்க்நம் விஶ்வேஶ்வரம் பஜே ॥*

*(1 சதுராவ்ருத்திதர் பணத்தில் இவ்வாறு தியானம் சிலர் செய்வர் இதில் தாமரைக்கு மாற்றாக சங்கம் உள்ளது. )*

லமித்யாதி - பஞ்ச பூஜை

*4. லம் ப்ருதிவ்யாத்மநே மஹாகணபதயே கந்த்தம் கல்பயாமி।*
*4. ஹம் ஆகாஶாத்மநே மஹாகணபதயே புஷ்பம் கல்பயாமி।*
*4. யம் வாய் வாத்மநே மஹாகணபதயே தூபம் கல்பயாமி।*
*4. ரம் வஹ்ந்யாத்மநே மஹாகணபதயே தீபம் கல்பயாமி।*
*4. வம் அம்ருதாத்மநே மஹாகணபதயே நைவேத்யம் கல்பயாமி*
*4. ஸம் ஸர்வாத்மநே மஹாகணபதயே தாம்பூலம் (ஸர்வோப சாரபூஜா:) கல்பயாமி)*

## नारिकेलखण्डहवनकल्पः

महागणपतिप्रीत्या सर्वसत्कार्यसिद्धिदम् ।
लाङ्गलीफलखण्डानां वक्ष्यामि हवनक्रमम् ॥ १ ॥
दशवारं गणानां त्वा जपित्वाथर्वशीर्षकम् ।
एकविंशतिवारं च जपेच्छ्रद्धापुरःसरम् ॥ २ ॥
विधिनाग्निं प्रतिष्ठाय बलवर्धनसंज्ञकम् ।
भावयित्वा गणपतिं परिषिच्य यथाविधि ॥ ३ ॥
नारिकेलस्य खण्डानां जुहुयात् हव्यवाहने ।
मन्त्रेणैकं गणानां त्वा जुहुयाच्छकलं ततः ॥ ४ ॥
दशाथर्वशिरोमन्त्रैः द्विरावृत्या तु विंशतिः ।
एवं हुनेत्प्रतिदिनं एकविंशतिमाहुतिम् ॥ ५ ॥
हुनेत् घृतं व्याहृतिभिः साद्गुण्यार्थं च कर्मणः ।
होमशेषं समाप्याथ ब्रह्मणस्पतयेऽर्पयेत् ॥ ६ ॥
समर्पयामि मनसा वाचा तन्वेति भक्तितः ।
सर्वसत्कार्यसंसिद्धः भवत्येव न संशयः ॥ ७ ॥
सत्कामनायाः संसिद्ध्यै वक्ष्ये काम्यक्रमान्तरम् ।
अथर्वशीर्षोक्तमूलमन्त्रं दशसहस्रकम् ॥ ८ ॥
गायत्रीं वा गणपतिं जपेदयुतसंख्यया ।
द्विदशैकफलानां तु खण्डैः जपदशांशतः ॥ ९ ॥
सहस्रं जुहुयाद्धीमान् ब्रह्मणस्पतितुष्टये ।
संकल्पितस्य कार्यस्य सिद्धिं प्राप्नोति सत्वरम् ॥ १० ॥

## बौधायनोक्तः विनायककल्पः

आचम्य प्राणानायम्य देशकालौ संकीर्त्य पुण्यतिथौ - मम श्रीसिद्धि विनायकप्रसादेन सर्वकर्मसु निर्विघ्नताप्राप्त्यर्थं बौधायनोक्तविनायककल्पानुसारेण श्रीमहागणपतिमुपासिष्ये ।

तत्रादौ गणेशपूजनं, पुण्याहवाचनं, स्थण्डिलस्य ऐशान्ये वरुणमावाह्य संपूजयेत्। स्थण्डिले अग्नेः प्रतिष्ठापनां कृत्वा अन्वाधानं कुर्यात्। प्रमुखदेवता भूपतिविनायकः। भुवनपतिविनायकः। भूतानां पतिविनायकः। अंगहोमे वरुणं द्विः। प्रधानहोमान्तं कृत्वा।

पश्चिमाभिमुखे देवे उपविष्टे कलशोपरि प्रतिमायां विग्रहे वा विनायक स्थापनं पूजनम्। संकल्पादिः। पूजनान्ते ॐ भूपतये नमो भुवनपतये नमो भूतानां पतये नमः। इति मंत्रेण उपस्थाय - ॐ विनायकाय भूपतये नमो विनायकाय स्वाहा। ॐ विनायकाय भुवनपतये नमो विनायकाय स्वाहा। ॐ विनायकाय भूतानां पतये नमो विनायकाय स्वाहा।

इति मन्त्रेण प्रधानहोमं कृत्वा ''इमं मे'' इत्यादि होमशेषं प्रायश्चित्तान्तं समापयेत्। अपूपं, मोदकं, सक्तून्, पायसं विनिवेदयेत्। एतत् निवेदनं भूमौ मण्डलं विलिख्य बलिदानरूपेण कर्तव्यम्।

तत्र मंत्राः। ॐ विघ्नाय स्वाहा। ॐ विनायकाय। ॐ वीराय। ॐ शूराय। ॐ उग्राय। ॐ भीमाय। ॐ हस्तिमुखाय। ॐ वरदाय। ॐ विघ्नपार्षदेभ्यः। ॐ विघ्नपार्षदीभ्यः स्वाहा। स्वाहा प्रतिमन्त्रं। ''ये भूता'' इति मन्त्रेण भूतेभ्यः बहिर्भागे बलिं दद्यात्। ततश्च पंचसूत्रात्मकं कंकणं हस्ते व्याहृतिभिः बध्नीयात्। विनायक महाबाहो विघ्नेश भवदाज्ञया॥ कामा मे साधिताः सर्वे इदं बध्नामि कंकणम्॥ १॥

पूर्णाहुतिं होमशेषं समाप्य साग्निकं विनायकं प्रदक्षिणीकृत्य साष्टाङ्गं प्रणम्य प्रार्थयेत्। ततश्च विसर्जयेत्।

## सपर्याङ्गो होमः

(वैदिकतान्त्रिकः) (वैदिके आपस्तंबीयगृह्यानुसरि)

पूजामण्टपस्य ईशानभागे चतुरश्राकारं हस्तायाममङ्गुष्ठोन्नतं स्थण्डिलं परिकल्प्य तत्समीपे स्वासनमास्तीर्य, आसनपूजां विधाय प्राङ्मुखः उपविश्य महागणपति मन्त्रेण प्राणानायम्य, ऋषिच्छन्दो देवताबीज शक्तिकीलककर हृदयादिन्यासान् विन्यस्य महागणपतिं ध्यायन् लमित्यादिना उपचरेत्।

मूलं १०८ वारं जप्त्वा जपं समर्प्य श्रीगुरुं प्रणमेत् । स्थण्डिलं मूलेन निरीक्ष्य, फट् इति सामान्यार्घ्योदकेन प्रोक्ष्य कुशेन ताडयित्वा, हुं इत्यवकुण्ठ्य स्थण्डिलोपरि मध्यमदक्षिणोत्तरेषु क्रमेण प्रागग्रास्तिस्रो रेखा विलिख्य तदुपरि मध्यमपश्चिमपूर्वेषु उदगग्राः तिस्रो रेखाः विलिख्य, तासु रेखासु उल्लेखक्रमेण - ॐ श्रीं ह्रीं क्लीं ब्रह्मणे नमः । ४ यमाय नमः । सोमाय नमः । ४ रुद्राय नमः । ४ विष्णवे नमः । ४ इन्द्राय नमः । इत्यभ्यर्चयेत् ।। (४ ओं श्रीं ह्रीं क्लीं)

ततः स्वदेहे षडङ्गन्यासं कुर्यात् । यथा - ४ सहस्रार्चिषे हृदयाय नमः । ४ स्वस्तिपूर्णाय शिरसे स्वाहा । ४ उत्तिष्ठपुरुषाय शिखायै वषट् । ४ धूमव्यापिने कवचाय हुं । ४ सप्तजिह्वाय नेत्रत्रयाय वौषट् । ४ धनुर्धराय अस्त्राय फट् ।



अनेनैव षडङ्गेन अग्नीशासुरवायुकोणेषु मध्ये दिक्षु च स्थण्डिलमभ्यर्च्य तत्र अष्टकोणषट्कोणत्रिकोणात्मकमग्निचक्रं प्रवेशरीत्या विलिख्य त्रिकोणे दिगष्टकं विभाव्य तत्र स्वाग्रादिप्रादक्षिण्येन दिक्षु मध्ये च क्रमात् –

४ पीतायै नमः । ४ श्वेतायै नमः । ४ अरुणायै नमः । ४ कृष्णायै नमः । ४ धूम्रायै नमः । ४ तीव्रायै नमः । ४ स्फुलिङ्गिन्यै नमः । ४ रुचिरायै नमः । ४ ज्वालिन्यै नमः इति पीठशक्तीः समर्चयेत् ।।

ततः पीठमध्ये – ४ तं तमसे नमः । ४ रं रजसे नमः । ४ सं सत्वाय नमः । ४ आं आत्मने नमः । ४ अं अन्तरात्मने नमः । ४ पं परमात्मने नमः । ४ ह्रीं ज्ञानात्मने नमः । इति पूजयेत् ।।

ततः त्रिकोणे - ४ ओं ह्रीं वागीश्वरीवागीश्वराभ्यां नमः – इति मन्त्रेण जनिष्यमाणस्य वह्नेः पितरौ वागीश्वरीवागीश्वरौ संपूज्य तयोर्मिथुनीभावं भावयित्वा (अरणेः सूर्यकान्ताद्वा वह्निमुत्पाद्य द्विजगृहाद्वा) अग्निं आनीय मृत्पात्रे ताम्रपात्रे वा स्थण्डिलाद्बहिः आग्नेय्यां ऐशान्यां नैर्ऋत्यां वा दिशि निधाय तस्मात्क्रव्यादांशमेकमग्निशकलं फट् इति अस्त्रमन्त्रेण नैर्ऋत्यां निरस्य अग्निं मूलेन निरीक्ष्य प्रोक्ष्य फट् इति कुशैस्ताडयित्वा हुं इत्यवकुण्ठ्य, धेनुयोनिमुद्रे प्रदर्श्य, ततः ४ ओं रं वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहा इति मूलाधारोद्गतं संविदग्निं ललाटनेत्रद्वारा निर्गमय्य तं वागीश्वरबीजस्य वागीश्वरीयोन्यां प्रवेशबुद्ध्या बाह्याग्नौ संयोजयेत्। (स्वमूलाधारस्थ वह्निमण्डलगतं परमात्मस्वरूप - अग्नीषोमात्मकात् बिन्दोः सकाशात् अग्निं, मणिपूरकगत जाठराग्निना सह सुषुम्नामार्गेण वहन् नासा पुटाध्वना निर्गमय्य, रमिति वह्निबीजं उच्चरन् पुरतः पात्रस्थिते अग्नौ योजयेत्। बैन्दव - औदर्य - पार्थिव वह्नीनामैक्यं विभावयेत्। वागीश्वर बीजं वागीश्वरी योन्यां निहितं भावयेत्। इत्यपि क्रमः।)

ततः ४ कवचाय हुं इति मन्त्रेण इन्धनैराच्छाद्य ४ अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम्। सुवर्णवर्णममलं समिद्धं विश्वतोमुखम्॥ इत्युपस्थाय। ४ उत्तिष्ठ पुरुष हरितपिङ्गल लोहिताक्ष सर्वकर्माणि साधय मे देहि दापय स्वाहा इति वह्निमुत्थाप्य ततः ओं ह्रीं इति स्थण्डिलोपरि अग्निं त्रिवारं भ्रामयित्वा स्थण्डिले स्थापयेत्। ४ चित्पिङ्गल हन हन दह दह पच पच सर्वज्ञाज्ञापय स्वाहा इति प्रज्वाल्य, ज्वालिनीमुद्रां प्रदर्श्य (प्राक्तोयं निधाय), वागीश्वरीगर्भे धृतं ध्यात्वा ऐं नमः अस्य होमाग्नेः गर्भाधानकर्म, पुंसवनकर्म, सीमन्तोन्नयनकर्म, जातकर्म, महागणपत्यग्निरिति नाम्ना नामकरणकर्म च कल्पयामि नमः, ४ ऐं नमः महागणपत्यग्नेः अस्य अन्नप्राशनकर्म, चौलकर्म, उपनयनकर्म, गोदानकर्म, विवाहकर्म च कल्पयामि नमः - इति तत्तत्कर्मभावनया अक्षतैरभ्यर्चयेत्॥

ततः सामान्यार्घ्योदकेनाग्निं मूलेन परिषिच्य अग्निमलंकृत्य प्रागग्रैरुदगग्रैश्च कुशैः परिस्तीर्य उत्तरतो दर्भानास्तीर्य दर्वी आज्यस्थालीं प्रोक्षणीं प्रणीतां इतरदर्वीं इध्मं च द्वन्द्वन्यञ्चि (अधोबिलं) पात्राणि सादयित्वा द्वौ दर्भौ प्रादेशमात्रे पवित्रे कृत्वा अद्भिरनुमृज्य, सामान्यार्घ्योदकेन षट् पात्राणि प्रोक्ष्य, प्रोक्षणीपात्रमादाय पुरतो निधाय, अक्षतैः सह सामान्यार्घ्योदकेन पूरयित्वा, हस्तयोः अङ्गुष्ठोपकनिष्ठिकाभ्यामुदगग्राभ्यां पवित्राभ्यां मूलेन त्रिः प्रागुत्पूय, मूलेन सप्तधा अभिमन्त्र्य, उत्तानानि पात्राणि कृत्वा, इध्मं विस्रस्य त्रिः प्रोक्ष्य, प्रोक्षणीपात्रं दक्षिणतो निधाय, प्रणीतापात्रमादाय पुरतो निधाय, पवित्रे तस्मिन्निधाय, अक्षतैः सह अङ्कुशमुद्रया मूलेन सामान्यार्घ्योदकेन पूरयित्वा पूर्ववदुत्पूय घ्राणसममुद्धृत्य पात्रासादानादुत्तरतो दर्भेषु सादयित्वा, वरुणाय नमः इति गन्धपुष्पाक्षतैरभ्यर्च्य दर्भैः प्रच्छाद्य, पवित्रे आज्यपात्रे निधाय, अग्नेः दक्षिणतो ब्रह्माणं दर्भेषु निषाद्य, अस्मिन् महागणपति होमकर्मणि ब्रह्माणं त्वा वृणे । ओं ब्रह्मणे नमः सकलाराधनैः स्वर्चितम् । इति पूजयेत्

अपरेणाग्निं पवित्रान्तर्हितायामाज्यस्थाल्यां आज्यं निरुप्य उदीचोऽङ्गारान्निरूह्य तेषु आज्यमधिश्रित्य ज्वलता तृणेनावद्योत्य द्वे दर्भाग्रे प्रच्छिद्य प्रक्षाल्य प्रत्यस्य त्रिः पर्यग्निकृत्वा उदगुद्वास्य अङ्गारान्प्रत्यूह्य आज्यस्थालीं स्वपुरतो निधाय मूलेन सप्तवारमभिमन्त्र्य ईक्षणप्रोक्षणताडनावकुण्ठनानि कृत्वा उदगग्राभ्यां पवित्राभ्यां पुनराहारमाज्यं त्रिरुत्पूय पवित्रग्रन्थिं विस्रस्य अप उपस्पृश्य प्रागग्रं अग्नौ प्रहरति । अथ दर्व्यौ अग्नौ प्रतितप्य दर्भैः संमृज्य पुनः प्रतितप्य प्रोक्ष्य निधाय दर्भान् अद्भिः संस्पृश्य अग्नौ प्रहरति ॥

इध्ममादाय परिधीन् परिदधाति - स्थूलं उदगग्रं पश्चात्, अणीयांसं दीर्घं प्रागग्रं दक्षिणतः, अणिष्ठं ह्रसिष्ठं प्रागग्रं उत्तरतः, अग्निपरिस्तरणयोर्मध्ये अन्योन्यसंस्पृष्टान् निधाय, मध्यमं परिधिं दक्षिणहस्तेनोपस्पृश्य अग्नेः दक्षिणपूर्व - उत्तरपूर्वदेशयोः आघारसमिधौ निधाय अग्निं परिषिञ्चति - अदितेऽनुमन्यस्व, अनुमतेऽनुमन्यस्व, सरस्वतेऽनुमन्यस्व, देव सवितः प्रसुव इति परिषिच्य अग्निमलंकृत्य इध्ममादाय द्विरभिघार्य मूलमध्ययोः

मध्यं मृगीमुद्रया गृहीत्वा अस्मिन् महागणपति होमकर्मणि ब्रह्मन् इध्ममाधास्ये इति ब्रह्माणमनुज्ञाप्य, ओं आधत्स्व इत्यनुज्ञातः हस्ताभ्यां इध्मं आदधाति। स्रुवेण आज्यमादाय तूष्णीं आघारावाघारयति।

(इतरदर्व्यां वायव्यादाग्नेयान्तं) स्वाहा। प्रजापतय इदं न मम।

(प्रधानदर्व्यां नैर्ऋत्यादीशानान्तं) स्वाहा। इन्द्रायेदं न मम।

(उत्तरार्धपूर्वार्धे) अग्नये स्वाहा। अग्नय इदं। न मम।

(दक्षिणार्धपूर्वार्धे) सोमाय स्वाहा। सोमायेदं। न मम।

(समं पूर्वेण मध्ये) अग्नये स्वाहा। अग्नय इदं न मम।

आरम्भप्रभृति एतत्क्षणपर्यन्तं मध्ये संभावितसमस्तदोषप्रायश्चित्तार्थं सर्वप्रायश्चित्तं होष्यामि। ओं भूर्भुवःसुवः स्वाहा। प्रजापतय इदम् न मम। (अथाग्निं ध्यायेत्)

त्रिणयनमरुणसाबद्धमौलिं सुशुक्लां-
शुकमरुणमनेकाकल्पमम्भोजसंस्थम्।
अभिमतवरशक्तिं स्वस्तिकाभीतिहस्तं
नमत कनकमालालंकृतांसं कृशानुम्॥

अथ अष्टकोणे स्वाग्रादिप्रादक्षिण्येन।

४ जातवेदसे नमः। ४ सप्तजिह्वाय नमः। ४ हव्यवाहनाय नमः। ४ अश्वोदराय नमः। ४ वैश्वानराय नमः। कौमारतेजसे नमः। ४ विश्वमुखाय नमः। ४ देवमुखाय नमः। इत्यभिपूज्य॥

षट्कोणे ४ सहस्रार्चिषे हृदयाय नमः। ४ स्वस्तिपूर्णाय शिरसे स्वाहा। ४ उत्तिष्ठपुरुषाय शिखायै वषट्। ४ धूमव्यापिने कवचाय हुम्। ४ सप्तजिह्वाय नेत्रत्रयाय वौषट्। ४ धनुर्धराय अस्त्राय फट्। इत्यभ्यर्च्य।

त्रिकोणे- ४ ओं वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहा इति मन्त्रेण अग्निं पुष्पाक्षतैरर्चयेत्।

अग्नेः सप्तजिह्वासु एकैकां आज्याहुतिं कुर्यात्।

४ हिरण्यायै नमः स्वाहा - हिरण्याया इदं न मम (ऐशान्यां)

४ कनकायै नमः स्वाहा - कनकाया इदं न मम (प्राच्यां)

४ रक्तायै नमः स्वाहा - रक्ताया इदं न मम (आग्नेय्यां)

४ कृष्णायै नमः स्वाहा - कृष्णाया इदं न मम (नैर्ऋत्यां)

४ सुप्रभायै नमः स्वाहा - सुप्रभाया इदं न मम (पश्चिमायां)

४ अतिरक्तायै नमः स्वाहा - अतिरक्ताया इदं न मम (वायव्यायां)

४ बहुरूपायै नमः स्वाहा - बहुरूपाया इदं न मम (मध्ये)

४ वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहा - अग्नय इदं नमम। ४ उत्तिष्ठपुरुष हरितपिङ्गळ लोहिताक्ष सर्वकर्माणि साधय मे देहि दापय स्वाहा - अग्नय इदं न मम। ४ चित्पिङ्गळ हन हन दह दह पच पच सर्वज्ञाज्ञापय स्वाहा अग्नय इदं न मम।

४ मूलं - गणानां त्वा + सादनम्। श्रीमहागणपतिमावाहयामि नमः।

४ मूलं - महागणपतये नमः गन्धान्धारयामि नमः।

४ मूलं महागणपतये नमः - पुष्पैः पूजयामि नमः।

४ मूलं सुमुखाय नमः इत्यादिषोडशनामभिः अर्चयेत्।

४ मूलं महागणपतये नमः धूपमाघ्रापयामि नमः।

४ मूलं महागणपतये नमः दीपं दर्शयामि नमः।

४ मूलं महागणपतये नमः महानैवेद्यं कल्पयामि नमः।

पूजा क्रमेण जुहुयात -

४ मूलं महागणपतये स्वाहा। (त्रिः)

४ ओं स्वाहा। ४ ओं श्रीं स्वाहा। ४ ओं श्रीं ह्रीं स्वाहा। ४ ओं श्रीं ह्रीं क्लीं स्वाहा। ४ ओं श्रीं ह्रीं क्लीं ग्लौं स्वाहा। ४ ओं श्रीं ह्रीं क्लीं ग्लौं गं स्वाहा। ४ओं श्रीं ह्रीं क्लीं ग्लौं गं गणपतये स्वाहा। ४ ओं श्री ह्रीं क्लीं ग्लौं गणपतये वर वरद स्वाहा। ४ ओं श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वर वरद सर्वजनं मे वशं स्वाहा। ४ ओं श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वरवरद सर्वजनं मे वशमानय स्वाहा॥ ४ मूलं स्वाहा (४ वारं)

पीठशक्तिहोमः ४ तीव्रायै स्वाहा । ४ ज्वालिन्यै स्वाहा । ४ नन्दायै स्वाहा । ४ भोगदायै स्वाहा । ४ कामरूपिण्यै स्वाहा । ४ उग्रायै स्वाहा । ४ तेजोवत्यै स्वाहा । ४ सत्यायै स्वाहा । ४ विघ्ननाशिन्यै स्वाहा ।

धर्माद्यष्टकहोमः - ४ ॠं धर्माय स्वाहा । ४ ॠं ज्ञानाय स्वाहा । ४ ॡं वैराग्याय स्वाहा । ४ ॡं ऐश्वर्याय स्वाहा । ४ ॠं अधर्माय स्वाहा । ४ ॠं अज्ञानाय स्वाहा । ४ ऌं अवैराग्याय स्वाहा । ४ ॡं अनैश्वर्याय स्वाहा । ४ मूलं महागणपतये स्वाहा । (१० वारं) ।

षडङ्गहोमः - ४ ओं गां हृदयाय नमः । हृदयदेव्यै स्वाहा । ४ श्रीं गीं शिरसे स्वाहा । शिरोदेव्यै स्वाहा । ४ ह्रीं गूं शिखायै वषट्, शिखादेव्यै स्वाहा । ४ क्लीं गैं कवचाय हुं कवचदेव्यै स्वाहा । ४. ग्लौं गौं नेत्र त्रयाय वौषट्, नेत्रदेव्यै स्वाहा । ४ गं गः अस्त्राय फट्, अस्त्रदेव्यै स्वाहा ।

गुर्वोघहोमः - ४ दिव्यौघगुरुभ्यः स्वाहा । ४ सिद्धौघगुरुभ्यः स्वाहा । ४ मानवौघगुरुभ्यः स्वाहा ।

प्रथमावरणहोमः - ४ श्रीं श्रीश्रीपतिभ्यां स्वाहा ४. ह्रीं गिरिजा गिरिजापतिभ्यां स्वाहा । ४ क्लीं रतिरतिपतिभ्यां स्वाहा । ४. ग्लौं महीमहीपतिभ्यां स्वाहा । ४. गं महालक्ष्मी महागणपतिभ्यां स्वाहा ।

द्वितीयावरणहोमः - ४ श्रीं गं ऋथामोदाभ्यां स्वाहा । ४ श्रीं गं समृद्धिप्रमोदाभ्यां स्वाहा । ४ क्लीं गं कान्तिसुमुखाभ्यां स्वाहा । ४ क्लीं गं मदनावती दुर्मुखाभ्यां स्वाहा । ४. क्लीं गं मदद्रवाऽविघ्नाभ्यां स्वाहा । ४. क्लीं गं द्राविणी विघ्नकर्तृभ्यां स्वाहा । ४ ह्रीं गं वसुधाराशङ्खनिधिभ्यां स्वाहा । ४ ग्लौं गं वसुमती पद्मनिधिभ्यां स्वाहा ।

तृतीयावरणहोमः - ४. ओं गां हृदयाय नमः, हृदयदेव्यै स्वाहा । ४. श्रीं गीं शिरसे स्वाहा, शिरोदेव्यै स्वाहा । ४. ह्रीं गूं शिखायै वषट्, शिखादेव्यै स्वाहा । ४. क्लीं गैं कवचाय हुं, कवचदेव्यै स्वाहा । ४. ग्लौं गौं नेत्रत्रयाय वौषट्, नेत्रदेव्यै स्वाहा । ४. गं गः अस्त्राय फट्, अस्त्रदेव्यै स्वाहा ।

चतुर्थावरण होमः- ४ आं ब्राह्मयै स्वाहा। ४ ईं माहेश्वर्यै स्वाहा। ४ ऊं कौमार्यै स्वाहा। ४. ॠं वैष्णव्यै स्वाहा । ४. ॡं वाराह्यै स्वाहा। ४. ऐं माहेन्द्र्यै स्वाहा। ४. औं चामुण्डायै स्वाहा। ४ अः महालक्ष्म्यै स्वाहा।

पञ्चमावरणहोमः - ४ लं वज्रायुधाय इन्द्राय स्वाहा। ४. शक्त्यायुधाय अग्नये स्वाहा। ४. टं दण्डायुधाय यमाय स्वाहा। ४ क्षं खड्गायुधाय निर्ऋतये स्वाहा। ४. वं पाशायुधाय वरुणाय स्वाहा। ४ यं ध्वजायुधाय वायवे स्वाहा। ४ सं शंखायुधाय सोमाय स्वाहा। ४. त्रिशूलायुधाय ईशानाय स्वाहा।

४. मूलं पञ्चावरणचक्रेशाय महागणपतये स्वाहा। (१० वारं)

अष्टद्रव्यहोमः - ४ मूलं स्वाहा। इत्यष्टद्रव्यैः समसंख्याकतया होमः। (मोदकाः अखण्डिताः, पृथुकाः लाजाः सक्तवश्च मुष्टिमिताः। इक्षुखण्डाः पर्वमिताः। नारिकेलं अष्टधा खण्डितम्। तिलाः चुलुकमात्राः। कदलीफलं अखण्डितं, (पृथु चेत् खण्डितं)। मधु-क्षीर-घृतसिक्तानां एषां सामान्यार्घ्य - विशेषार्घ्याभ्यां प्रोक्षणेन पवित्रीकृतानां ४-८-१२-१०८ इति संख्यया होमः।)

नालिकेरशकलहोमः - ४ मूलं, मम अनुकूलं प्रयच्छ प्रयच्छ। प्रतिकूलं नाशय नाशय। संपदो वर्धय वर्धय। सर्वत्र विजयं प्रयच्छ स्वाहा। (८ वारं) *(தேங்காய்கீற்று)*

आज्यहोमः - ४. गणानां त्वा + सादनं स्वाहा। (८ वारं)

व्रीहिधान्यहोमः - ४ उत्तिष्ठ पुरुष हरितपिङ्गल लोहिताक्ष सर्वाभीष्टं देहि देहि दापय दापय स्वाहा। अग्निरूपाय श्रीमहागणपतये इदं, न मम।

नारिकेलकपालहोमः - (त्रिनेत्रकपालेन) ४. जातवेदसे + दुरितात्यग्निः। स्वाहा। अग्निरूपाय महागणपतय इदं, न मम। (अन्येन कपालेन) ध्रुवास्वध्रुवासु क्षितिषु क्षीयन्तो व्यस्मिन् पाशं वरुणो मुमोचत्। अपो वन्वाना अदितेरुपस्थात् यूयं पात स्वस्तिभिः सदा नः स्वाहा। वरुणरूपाय महागणपतय इदं न मम।

दूर्वाद्वयहोमः । (घृतसिक्तदूर्वाङ्कुरैः) मूलं स्वाहा । (८ वारं)

पूर्णाहुतिः । (होमावशिष्टेन आज्येन स्रुचं पूरयित्वा पुष्पं फलं अग्रे निधाय स्रुवेण आच्छाद्य - आतून इन्द्र क्षुमन्तम् । चित्रं ग्राभं सङ्गृभाय । महाहस्ती दक्षिणेन । ४ मूलं वौषट् इति उत्थितो जुहुयात् ।

महागणपतिं मूलेन षोडशभिरुपचारैः पूजयेत् । मूलमन्त्रजपः । (१०८ वारं) गणेशगायत्रीजपः । तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि । तन्नो दन्तिः प्रचोदयात् । (१० वारं) गणपत्यथर्वशीर्षजपः (१ वारं)

बलिदानं - पुरतः स्ववामे त्रिकोणवृत्त चतुरश्रात्मकं मण्डलं सामान्यार्घ्योदकेन मत्स्यमुद्रया विलिख्य, ४. ऐं व्यापकमण्डलाय नमः इति मण्डले पुष्पं दत्वा, अर्धभक्तपूरितोदकं सक्षीरं निधाय, ४. ओं ह्रीं सर्वविघ्नकृद्भ्यो भूतेभ्यो हुं फट् स्वाहा इति त्रिः पठन् दक्षकरार्पितं वामकरतत्वमुद्रास्पृष्टं तीर्थं बल्युपरि दद्यात् । वामपार्ष्णि घातकरास्फोटौ कुर्वन् समुदश्चितवक्त्रः बाणमुद्रया बलिं भूतैः ग्रासितं विभाव्य योनिमुद्रया प्रणमेत् ।

अथ अग्नेर्मध्यभागे स्थितायां दक्षिणोत्तरायतायां बहुरूपाख्यजिह्वायां, महाव्याहृतिहोमः । ४ भूरग्नये च पृथिव्यै च महते च स्वाहा । अग्नये पृथिव्यै महत इदम् । ४ भुवो वायवे चान्तरिक्षाय च महते च स्वाहा । वायवे अन्तरिक्षाय महत इदम् न मम । ४ सुवरादित्याय च दिवे च महते च स्वाहा । आदित्याय दिवे महत इदम् न मम । ४ भूर्भुवःसुवश्चन्द्रमसे च नक्षत्रेभ्यश्च दिग्भ्यश्च महते च स्वाहा । चन्द्रमसे नक्षत्रेभ्यो दिग्भ्यो महत इदम् न मम । इति चतस्र आहुतीराज्येन हुत्वा ।

४. इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतो जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसावाचा कर्मणा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यत् स्मृतं यत्कृतं यदुक्तं तत्सर्वं ब्रह्मार्पणं भवतु स्वाहा । परब्रह्मण इदम् । इति ब्रह्मार्पणाहुतिं विदध्यात् ॥ एतत्कर्मसमृद्ध्यर्थं जयादिहोमः कार्यः ।

स नो भुवनस्य पते यस्य त उपरि गृहा इह च। उरु ब्रह्मणेऽस्मै क्षत्राय महि शर्म यच्छ स्वाहा। भुवनस्य पत्यै ब्रह्मण इदं न मम। प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव। यत्कामास्ते जुहुमस्तन्नो अस्तु वयँ स्याम पतयो रयीणां स्वाहा। प्रजापतय इदं न मम। भूः स्वाहा। अग्नय इदं न मम। भुवः स्वाहा। वायव इदं न मम। सुवः स्वाहा। सूर्यायेदं न मम। यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यूनमिहाकरम्। अग्निष्टथ्स्विष्ट-कृद्विद्वान्थ्सर्वँ स्विष्टँ सुहुतं करोतु स्वाहा। अग्नये स्विष्टकृत इदं नमम।

चरुकर्मसु प्रधानदर्व्याज्येन निधानक्रमात् परिध्यञ्जनं कृत्वा लेपकार्यं कुर्यात्। आज्यस्थाल्या दक्षिणतः प्रधानदर्वीं निधाय, इतरदर्वीं मध्ये निधाय, पात्रसादनार्थदर्भानादाय, प्रधानदर्व्यामग्रं, इतरस्यां मध्यं, आज्यस्थाल्यां मूलमित्युदगपवर्गं क्रमेण त्रिरक्त्वा, अक्तस्य बर्हि-षस्तृणमपादाय, प्रज्ञातं निधाय, दक्षिणोत्तराभ्यां पाणिभ्यां प्रधानदर्व्यां बर्हिः प्रतिष्ठाप्य, दक्षिणेन करेणाग्नौ प्रहरति। त्रिरुद्यम्य, अपात्ततृणमग्नौ प्रहरति। तत्त्रिरङ्गुल्या निर्दिश्य, अग्निमभिमन्त्रयते। अथ भूमिमुपस्पृश्य, परिधी न्प्रहरति। मध्यमं परिधिमग्नौ प्रहृत्य, अन्यौ परिधी हस्ताभ्यामादाय युगपदग्नौ प्रहरन्नुत्तरार्ध्यस्याग्र मङ्गारेषूपोहति। दर्वीद्वयेन संस्रावं परिधीनभिजुहोति। स्वाहा। वसुभ्यो रुद्रेभ्य आदित्येभ्यः सँस्रावभागेभ्य इदं न मम। ओं भूर्भुवस्सुवः स्वाहा। प्रजापतय इदं न मम।

अस्मिन् महागणपतिहोमकर्मणि अविज्ञातप्रायश्चित्तादीनि होष्यामि। अनाज्ञातं यदाज्ञातं यज्ञस्य क्रियते मिथु। अग्ने तदस्य कल्पय त्वँ हि वेत्थ यथातथँ स्वाहा। अग्नय इदं न मम। पुरुषसंमितो यज्ञो यज्ञः पुरुषसंमितः। अग्ने तदस्य कल्पय त्वँ हि वेत्थ यथातथँ स्वाहा। अग्नय इदं न मम। यत्पाकत्रा मनसा दीनदक्षा न यज्ञस्य मन्वते मर्तासः। अग्निष्टद्धोता क्रतुविद्विजान न्यजिष्ठो देवाँ ऋतुशो यजाति स्वाहा। अग्नय इदं न मम। भूः स्वाहा। अग्नय इदं न मम। भुवः स्वाहा। वायव इदं न मम। सुवः स्वाहा। सूर्यायेदं न मम। ओं भूर्भुवस्सुवः स्वाहा। प्रजापतय इदं न मम।

अस्मिन् महागणपतिहोमकर्मणि मध्ये संभावितसमस्तमन्त्र लोपतन्त्र लोपक्रियालोपाज्यलोपन्यूनातिरेकविस्मृतिविपर्यासप्रायश्चित्तार्थं सर्व-प्रायश्चित्तं होष्यामि । ओं भूर्भुवस्सुवः स्वाहा । प्रजापतय इदं न मम । श्रीविष्णवे स्वाहा । विष्णवे परमात्मन इदं न मम । नमो रुद्राय पशुपतये स्वाहा । रुद्राय पशुपतय इदं न मम । अप उपस्पृश्य । सप्त ते अग्न समिधः सप्त जिह्वाः सप्त ऋषयः सप्त धाम प्रियाणि । सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनीरापृणस्वा घृतेन स्वाहा । अग्नये सप्तवत इदं न मम । आज्य पात्रादीनुत्तरतो निधाय, प्राणायामं कृत्वा, अग्निं परिषिञ्चति । अदितेऽन्वमँस्थाः । अनुमतेऽन्वमँस्थाः । सरस्वतेऽन्वमँस्थाः । देव सवितःप्रासावीः ।

ततः प्रणीतापात्रं स्वस्य पुरतः आदाय, पूर्णमसि पूर्णं मे भूयाः । सदसि सन्मे भूयाः । सर्वमसि सर्वं मे भूयाः । इति अन्यजलं निनीय तज्जलं प्रागादि प्रदक्षिणं - प्राच्यां दिशि देवा ऋत्विजो मार्जयन्ताम् । दक्षिणस्यां दिशि मासाः पितरो मार्जयन्ताम् । प्रतीच्यां दिशि गृहाः पशवो मार्जयन्ताम् । उदीच्यां दिश्याप ओषधयो वनस्पतयो मार्जयन्ताम् । ऊर्ध्वायां दिशि यज्ञः संवत्सरो यज्ञपतिर्मार्जयन्ताम् - इति प्रतिदिशमुत्सृज्य पुरस्तात् अक्षतोपरि निस्राव्य, तेन - ब्राह्मणेष्वमृतं हितम् । येन देवाः पवित्रेण । अत्मानं पुनते सदा । तेन सहस्रधारेण । पावमान्यः पुनन्तु मा - इत्यात्मानं प्रोक्ष्य दक्षिणतो निषादितं ब्रह्माणं संपूज्य तस्य वरं दत्त्वा प्रागादिपरिस्तरणमुत्तरे विसृजेत् ।

अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् । सुवर्णवर्णममलं समिद्धं विश्वतोमुखम् ॥ इत्युपस्थाय चिदग्निं, उपावरोह जातवेदः पुनस्त्वं देवेभ्यो हव्यं वह नः प्रजानन् । आयुः प्रजाँ रयिमस्मासु धेहि अजस्रो दीदिहि नो दुरोणे ॥ महागणपत्यग्निं आत्मन्युद्वासयामि नमः इत्युद्वास्य हृदये अञ्जलिं दद्यात् ।

तद्भूतितिलकं - त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम् । अगस्त्यस्य त्र्यायुषं यद्देवानां त्र्यायुषं तन्मेऽस्तु त्र्यायुषं । शिवो नामासि स्वधितिस्ते पिता नमस्ते अस्तु मा मा हिंसीः । इति त्र्यायुषमन्त्रेण रक्षां धारयेत् । इति शिवम् ।

# एकाक्षरगणपतिहवनविधिः

आचम्य पवित्रपाणिः प्राणानायम्य देशकालौ संकीर्त्य श्रीपरमेश्वरप्रीत्यर्थं श्रीगणपतिप्रीत्यर्थं दूर्वाभिः (लाजैर्मोदकैर्वा) हवनं करिष्ये। गणेशपूजनादि कृत्वा मंडपमध्ये कलशं धान्योपरि निधाय मण्डपं पूजयेत्।

कुंडपूर्वतः हस्तमात्रायां वेद्यां सर्वतोभद्रं (गणपतिभद्रं वा) विरच्य तत्र ब्रह्मादिमंडलदेवता आवाह्य संपूज्य मंडलमध्ये कलशं संस्थाप्य पूर्णपात्रे रक्तवस्त्रे गणेशाष्टगंधेन (गणेशाष्टगंधो यथा-केशरं रोचना मांसी कस्तूरी अगुरुस्तथा। सुचंदनं तथा मुस्ता रक्तचंदनमष्टमम्) त्रिकोणषट्कोणवृत्ताष्टदलात्मकं मंडलं विलिख्य समंततश्चतुर्दिक्षु चतुर्द्वारयुतं रेखात्रययुतं भूगृहं विलिख्य त्रिकोणमध्ये कर्णिकायां ॐ गं ॐ इति लिखिते मूलमंत्रे कृताग्न्युत्तारणायां सुवर्णप्रतिमायां सिद्धिबुद्धिसहितं श्रीगणपतिं ॐ गं ॐ ॐ 'गणानां त्वा' इति मंत्राभ्यां आवाह्य प्रतिष्ठाप्य कलशशंखघंटादीपान् संपूज्य पूजांगन्यासान् कुर्यात्।

अथ न्यासाः। ऋष्यादिन्यासः। अस्य एकाक्षरगणपतिमंत्रस्य गणक ऋषिः निचृद्गायत्री छंदः। गणपतिर्देवता, गं बीजं, ॐ शक्तिः, श्रीगणपति प्रीत्यर्थं पूजायां विनियोगः। ॐ गां गीं गूं गैं गौं गः इति कर षडङ्गन्यासौ। ओं गं ॐ इति मूलेन व्यापकं कृत्वा ॐ अस्त्राय फट् इति ऊर्ध्वोर्ध्वं तालत्रयं कुर्यात्। ततस्तर्जन्यंगुष्ठाग्रध्वनिना ॐ अस्त्राय फट् इति दिग्बंधनं कुर्यात्।

ध्यानं। सिंदूराभं त्रिनेत्रं पृथुतरजठरं हस्तपद्मैर्दधानं दन्तं पाशांकुशेष्टानुरु करविलसद्बीजपूराभिरामम्॥ बालेंदुद्द्योतमौलिं करिपतिवदनं दानपूरार्द्रगंडं भोगींद्राबद्धभूषं भजत गणपतिं रक्तवस्त्रांगरागम्॥ इति ध्यात्वा॥ ॐ गं ॐ ॐ गणानां त्वा ॐ भूर्भुवः सुवः सिद्धिबुद्धिसहिताय श्रीगणपतये नमः। इति आवाहनादिमन्त्रपुष्पान्तैः उपचारैरभ्यर्च्य आवरणदेवता आवाहयेत्। यंत्रस्थत्रिकोणमध्यगतकर्णिकायां पूर्वे ॐ गणाधिपाय नमः गणाधिपं नागेंद्रभूषाढ्यं लाक्षालक्षितपुष्करं आवाहयामि। दक्षिणे ॐ गणेशाय नमः

गौरं गणेशानं नागेंद्रभूषाढ्यं लाक्षालक्षितपुष्करं आवाहयामि । पश्चिमे ॐ गणनायकाय नमः रक्तं गणनायकं नागेंद्रभू... । उत्तरे ॐ गणक्रीडाय नमः नीलं गणक्रीडं नागेंद्रभूषा... । अभीष्टसिद्धिं मे देहिशरणागतवत्सल । भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् । १ षट्कोणेषु पूर्वे ॐ गां आमोदाय नमः । २ आग्नेये ॐ गीं प्रमोदाय नमः ३ नैर्ऋते ॐ गूं सुमुखाय नमः । ४ पश्चिमे ॐ गैं दुर्मुखाय नमः । ५ वायव्ये ॐ गौं विघ्नकर्त्रे नमः । ६ ऐशाने ॐ गः विघ्नहर्त्रे नमः । तत्रैव आग्नेयकोणे ॐ गां हृदयाय नमः हृदयशक्तिं आवाहयामि । १ । नैर्ऋते ॐ गीं शिरसे स्वाहा शिरःशक्तिं आवाहयामि २ वायव्ये ॐ गूं शिखायै वषट् शिखाशक्तिं आवाहयामि ३ ऐशाने ॐ गैं कवचाय हुं कवचशक्तिं आवाहयामि ४ अग्रे ॐ गौं नेत्रत्रयाय वौषट् नेत्रशक्तिं आवाहयामि । ५ । पूर्वादिचतुर्दिक्षु ॐ गः अस्त्राय फट् अस्त्रशक्तिं आवाहयामि । अभीष्टसिद्धिं ... द्वितीया वरणार्चनम् । अष्टदले पूर्वादिक्रमेण ॐ वं वक्रतुंडाय नमः ॐ एं एकदंताय नमः ॐ मं महोदराय नमः ॐ गं गजाननाय नमः ॐ लं लंबोदराय नमः ॐ विं विकटाय नमः ॐ विं विघ्नराजाय नमः ॐ धूम्रवर्णाय नमः अभीष्ट ... ४ तृतीयावरणार्च...नम् ॥ ३ ॥ ततोष्टदलांतेषु पूर्वादिक्रमेण ॐ अं अणिमायै नमः ॐ मं महिमायै नमः ॐ लं लघिमायै ॐ गं गरिमायै ॐ प्रां प्राप्त्यै नमः ॐ प्रां प्राकाम्यायै ॐ ईं ईशितायै ॐ वं वशितायै ॥ अभीष्ट + चतुर्थावरणार्चनम् ॥ ४ ॥ ततोष्टदलप्रांतेषु पूर्वादिक्रमेण मातॄः ॐ आं ब्राह्म्यै ॐ ईं माहेश्वर्यै ॐ ऊं कौमार्यै ॐ ॠं वैष्णव्यै ॐ ॡं वाराह्यै नमः ॐ ऐं इंद्राण्यै नमः ॐ औं चामुण्डायै ॐ अः महालक्ष्म्यै ॥ अभीष्टसिद्धिं+ पंचमावरणार्चनम् ॥ ५ ॥ ततो भूपुरांतर्लोकपालान्पूर्वादितः ॐ लं इंद्राय सुराधिपतये नमः ॐ रं अग्नये तेजोऽधिपतये नमः ॐ मं यमाय प्रेताधिपतये ॐ क्षं निर्ऋतये रक्षोऽधिपतये ॐ वं वरुणाय जलाधिपतये ॐ यं वायवे प्राणाधिपतये ॐ सं सोमाय ताराधिपतये ॐ हं रुद्राय भूताधिपतये नैर्ऋतिपश्चिममध्ये ॐ ह्रीं शेषाय नागाधिपतये पूर्वेशानमध्ये ॐ आं ब्रह्मणे

लोकाधिपतये नमः । ६ । अभीष्टसिद्धि + षष्ठमावरणार्चनम् ॥ ६ ॥ ततो भूपुरांतप्रांतभागे पूर्वादिक्रमेण लोकपालायुधानि ॐ बं बज्राय नमः ॐ शं शक्तये । ॐ दं दंडाय । ॐ खं खड्गाय । ॐ पां पाशाय । ॐ अंकुशाय । ॐ गं गदायै । ॐ त्रिं त्रिशूलाय । नैर्ऋतिपश्चिमदेशे ॐ चं चक्राय पूर्वेशानमध्ये ॐ पं पद्माय । अभीष्ट + सप्तमावरणार्चनम् ॥ ७ ॥ भूपुरस्थतृतीयरेखायां पूर्वादिक्रमेण ॐ ऐं ऐरावताय । ॐ पुं पुंडरीकाय । ॐ वां वामनाय । ॐ कुं कुमुदाय । ॐ अं अंजनाय । ॐ पुं पुष्पदंताय । ॐ सां सार्वभौमाय । ॐ सुं सुप्रतीकाय नमः इति ॥ आवरणदेवताभ्यो नमः सकलपूजार्थे गंधान् समर्पयामि इति । गणपतिप्रतिमापूजां समाप्य कुंडांतिकमेत्य कुंडसंस्कारं विधाय "वरद" नामानमग्निं प्रतिष्ठाप्य ध्यात्वा प्रधानदेवतां श्रीसिद्धि बुद्धिसहितं गणपतिं दूर्वांकुरद्रव्येण (लाजद्रव्येण मोदकद्रव्येण वा) श्रीगणपत्यथर्वशीर्षस्य दशखंडात्मकैर्मंत्रैः... संख्याकाहुतिभिर्यक्ष्ये । आवरण देवता ब्रह्मादिमंडलदेवताश्च दशदशसंख्याभिराज्याहुतिभिर्यक्ष्ये । इति सङ्कल्प्य होमं कुर्यात् । ततः स्विष्टकृदादि । प्रायश्चित्तहोमान्ते दिग्बलयः मुख्यदेवताबलिः सार्वभौति कबलिश्च पूर्णाहुतिर्वसोर्धारा आवाहितदेवता नामुत्तरपूजा यजमानाभिषेको, विभूतिधारणं, मन्त्रैर्देवताविसर्जनं, इति साधारणक्रमानुसारेण प्रयोगोऽनुष्ठेयः ॥ (होमः जपांगभूतश्चेत् - जपाद्दशांशतो होमस्तद्दशांशेन ॐ गं ॐ गणपतिं तर्पयामि । इति मंत्रेण तर्पणं । तद्दशांशेन ॐ गं ॐ गणपतिं मार्जयामि इति मंत्रेण मार्जनं कुर्यादिति विशेषः । इति ।)

हवनसौकर्यार्थं आवरणदेवताः लिख्यन्ते । (ॐ कारः सर्वत्रादौ)

| | | |
|---|---|---|
| गणाधिपाय नमः | गणनायकाय | सुमुखाय |
| पुष्कराय | गणक्रीडाय | दुर्मुखाय |
| गणेशाय | आमोदाय | विघ्नहर्त्रे |
| पुष्कराय | प्रमोदाय | हृदयाय |

| | | |
|---|---|---|
| शिरसे | वशितायै | ब्रह्मणे लोकाधिपतये |
| शिखायै | ब्राह्म्यै | वज्राय |
| कवचाय | माहेश्वर्यै | शक्तये |
| नेत्रत्रयाय | कौमार्यै | दंडाय |
| अस्त्राय | वैष्णव्यै | खड्गाय |
| वक्रतुंडाय | वाराह्यै | पाशाय |
| एकदंताय | इंद्राण्यै | अंकुशाय |
| गजाननाय | चामुण्डायै | गदायै |
| लंबोदराय | महालक्ष्म्यै | त्रिशूलाय |
| विकटाय | इंद्राय सुराधिपतये | चक्राय |
| विघ्नराजाय | अग्नये तेजोधिपतये | पद्माय |
| धूम्रवर्णाय | यमाय प्रेताधिपतये | ऐरावताय |
| अणिमायै | निर्ऋतये रक्षोधिपतये | पुंडरीकाय |
| महिमायै | वरुणाय जलाधिपतये | वामनाय |
| लघिमायै | वायवे प्राणाधिपतये | कुमुदाय |
| गरिमायै | सोमाय ताराधिपतये | अंजनाय |
| प्राकाम्यायै | रुद्राय भूताधिपतये | पुष्पदंताय |
| ईशितायै | शेषाय नागाधिपतये | सार्वभौमाय |
| | | सुप्रतीकाय |

# श्रीगणपतिहोमः (लघुः)

सङ्कल्पः- श्रीपरमेश्वरप्रीत्यर्थं श्रीमहागणपति प्रसादसिद्ध्यर्थं श्रीमहागणपतिहोमकर्म करिष्ये। (अप उपस्पृश्य)

कलशं गन्धपुष्पाक्षतैरभ्यर्च्य पूजां कृत्वा, वं इति २१ वारं अभिमन्त्र्य धेनुमुद्रया अमृतीकृत्य, तेनात्मानं अग्निकुण्डं पूजाहोमद्रव्याणि च प्रोक्ष्य, आत्मनो दक्षिणे भागे पीठे भगवन्तं श्रीमहागणपतिं (कलशे मूर्तौ वा) आवाहयेत्।

आत्मनः पुरतः चतुरश्रस्थण्डिलं (होमकुण्डं) मूलेन निरीक्ष्य, फट् इति प्रोक्ष्य, कुशेन ताडयित्वा, कुशं नैर्ऋत्यां परिहृत्य, स्थण्डिलोपरि प्रागग्राः तिस्रो रेखाः दक्षिणे वामे मध्ये च क्रमेण विलिख्य, तदुपरि उदगग्राः पश्चिमे मध्ये पूर्वत्र च क्रमेण विलिख्य, अद्भिरवोक्ष्य अप उपस्पृशेत्।

भूर्भुवस्सुवरों इति अग्निं प्रतिष्ठाप्य, प्राक् तोयं निधाय, अग्निमिध्वा, प्रज्वालयेत्। प्रागग्रैः उदगग्रैश्च दर्भैः अग्निं परिस्तीर्य, प्रागादि दक्षिणानुत्तरान् उत्तरानधरान् कृत्वा, उत्तरेणाग्निं दर्भान् संस्तीर्य, तेषु द्वन्द्वं न्यञ्चि दर्वीं आज्यस्थालीं प्रोक्षणीं इतरदर्वीं च निदध्यात्। समौ अप्रच्छिन्नाग्रौ प्रादेशमात्रौ दर्भौ पवित्रे कृत्वा अद्भिरनुमृज्य सपवित्रेण पाणिना पात्राणि संस्पृश्य, प्रोक्षणीपात्रमादाय, अपरेणाग्निं निधाय, सपवित्रे तस्मिन् अक्षतैः सह अपः आसिच्य, प्राचीः त्रिरुत्पूय, पात्राण्युत्तानानि कृत्वा, सपवित्रेण पाणिना सर्वाभिः अद्भिः त्रिः प्रोक्ष्य प्रोक्षणीपात्रं दक्षिणतो निदध्यात्।

आज्यं विलाप्य, अपरेणाग्निं पवित्रान्तर्हितायां आज्यस्थाल्यां आज्यं निरूप्य, उदीचोऽङ्गारान् निरूह्य, तेष्वाज्यमधिश्रित्य, ज्वलता तृणेन अवद्योत्य, द्वे दर्भाग्रे प्रच्छिद्य प्रक्षाल्य प्रत्यस्य, त्रिः पर्यग्नि कृत्वा उदगुद्वास्य, अङ्गारान् प्रत्यूह्य अग्नेः पश्चात् दर्भेषु आज्यस्थलीं निधाय, उदगग्राभ्यां पवित्राभ्यां पुनराहारं त्रिरुत्पूय पवित्रग्रन्थिं विस्रस्य, अप उपस्पृश्य, प्रागग्रमग्नौ प्रहरेत्।

दर्वीं इतरदर्वीं च अग्नौ प्रतितप्य, दर्भैः संमृश्य प्रोक्ष्य, निधाय, दर्भान्, अद्भिः संस्पृश्य अग्नौ प्रहरति।

अग्निं परिषिञ्चति - अदितेऽनु मन्यस्व । (दक्षिणतः प्राचीनं) अनुमतेऽनुमन्यस्व । (पश्चात् उदीचीनं) सरस्वतेऽनुमन्यस्व । (उत्तरतः प्राचीनं) देव सवितः प्रसुव । (समन्तात्)

अग्निं ध्यायेत् - चत्वारि शृङ्गास्त्रयो अस्य पादा द्वे शीर्षे सप्तहस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आविवेश । एष हि देवः प्रदिशो नु सर्वाः पूर्वो हि जातः स उ गर्भे अन्तः । स विजायमानः स जनिष्यमाणः प्रत्यङ्मुखास्तिष्ठति विश्वतो मुखः । प्राङ्मुखो देव । हे अग्ने ! ममाभिमुखो भव । इति प्रार्थयेत् ।

होमकुण्डं गन्धपुष्पाक्षतैः अलङ्कृत्य (दिक्षु) - इन्द्राय नमः । अग्नये नमः । यमाय नमः । निरृतये नमः । वरुणाय नमः । वायवे नमः । सोमाय नमः । ईशानाय नमः । (मध्ये) अग्नये नमः । (आत्मनि) आत्मने नमः । इत्यभ्यर्च्य,

(इतरदर्व्या जुहोति - वायव्या आग्नेय्यन्तं) स्वाहा । प्रजापतय इदं, न मम ।

(प्रधानदर्व्या जुहोति - नैरऋत्या ऐशान्यन्तं) स्वाहा । इन्द्रायेदं, न मम ।

(उत्तरार्धं पूर्वार्धे) सोमाय स्वाहा । सोमाय इदं, न मम ।

(मध्ये) अग्नये स्वाहा । अग्नय इदं, न मम ।

आरंभप्रभृति एतत्क्षणपर्यन्तं मध्ये संभावितसमस्त दोषप्रायश्चित्तार्थं सर्वप्रायश्चित्तं होष्यामि । ओं भूर्भुवस्सुवस् स्वाहा । प्रजापतय इदं न मम ।

कुंभे मूर्तौ वा महागणपतिमावाहयेत् । श्रीमहागणपति मन्त्रं यथोपदेशं ऋषि-छन्दो - देवता - बीज - शक्ति - कीलक - विनियोग - कर - हृदयादि न्यास दिग्बन्धान् कृत्वा - बीजापूर + इष्टार्थदः इति ध्यात्वा, लमित्यादि पूजाः कृत्वा अस्मिन् कुंभे (मूर्तौ) अग्नौ च भगवन्तं महागणपतिं आवाहयामि । (उभयत्र, पृथक्पृथग्वा प्राणान् प्रतिष्ठापयेत् ।)

ओं आं ह्रीं क्रों यं रं लं वं शं षं सं हं ओं (यरलव शषसहों) हंसः सोऽहं सोऽहं हंसः महागणपतेः प्राण इह प्राणः। जीव इह स्थितः। सर्वेन्द्रियाणि वाङ्मनश्चक्षुः श्रोत्रजिह्वाघ्राण प्राणापानव्यानोदानसमानाः इहैवागत्य सुखं चिरं तिष्ठन्तु स्वाहा। सान्निध्यं कुर्वन्तु स्वाहा। असुनी ते पुनरस्मासु चक्षुः पुनः प्राणमिह नो धेहि भोगम्। ज्योक्पश्येम सूर्यमुच्चरन्तमनुमते मृलया नः स्वस्ति। आं ह्रीं क्रों, क्रों ह्रीं आं (इति ४० वारं जप्त्वा) महागणपति प्राणशक्त्यै नमः। (इति धूपं दीपं घृतमधुनिवेदनं च कृत्वा) (इतः परं ओं श्रीं ह्रीं क्लीं इति प्रणवानां ४ इति संज्ञा।) ओं श्रीं ह्रीं क्लीं श्रीमहागणपतये नमः। आवाहितो भव। स्थापितो भव। सन्निहितो भव। सन्निरुद्धो भव। अवकुण्ठितो भव। देव प्रसीद प्रसीद। देव सर्वजगन्नाथ यावद्धोमावसानकम्। तावत्त्वं प्रीतिभावेन बिम्बे (कलशे) अग्नौ च सन्निधिं कुरु॥ इति प्रार्थयेत्।

ततः अग्नौ कुंभे (बिम्बे) च युगपत् पृथक्पृथग्वा आसनादि उपचारान् समर्पयेत्।

४ श्रीमहागणपतये नमः आसनं समर्पयामि। ४ महागणपतये पादयोः पाद्यं समर्पयामि। ४ महागणपतये हस्तयोरर्घ्यं समर्पयामि। ४ महागणपतये आचमनीयं समर्पयामि। ४ महागणपतये स्नानं समर्पयामि। स्नानानन्तरं आचमनीयं समर्पयामि। ४ महागणपतये वस्त्राणि धारयामि। आचमनीयं समर्पयामि। ४ महागणपतये उपवीतं समर्पयामि। ४ महागणपतये आभरणानि समर्पयामि। ४ महागणपतये गन्धान् धारयामि। गन्धोपरि हरिद्राकुङ्कुमं समर्पयामि। ४ महागणपतये अक्षतान् समर्पयामि। ४ महागणपतिं पुष्पैः पूजयामि (षोडशनामभिः)। ४ महागणपतये धूपं आघ्रापयामि। ४ महागणपतये दीपं दर्शयामि। आचमनीयं समर्पयामि। ४ महागणपतये नारिकेलं कदलीफलं महानैवेद्यं समर्पयामि। आचमनीयं समर्पयामि। ४ महागणपतये ताम्बूलं समर्पयामि। ४ महागणपतये कर्पूरनीराजनं समर्पयामि। ४ महागणपतये प्रदक्षिणनमस्कारान् समर्पयामि। ४ महागणपतये मन्त्रपुष्पं समर्पयामि।

मूलमन्त्रेण दशधा विभक्तेन आज्येन जुहुयात्। ४ ओं स्वाहा। ४ श्रीं स्वाहा। ४ ह्रीं स्वाहा। ४ क्लीं स्वाहा। ४ ग्लौं स्वाहा। ४ गं स्वाहा। ४ गणपतये स्वाहा। ४ वर वरद स्वाहा। ४ सर्वजनं स्वाहा। ४ मे वशमानय स्वाहा स्वाहा

(अन्यः क्रमः। ४ ओं स्वाहा। ४ ओं श्रीं स्वाहा ४ ओं श्रीं ह्रीं स्वाहा। ४ ओं श्रीं ह्रीं क्लीं स्वाहा। ४ ओं श्रीं ह्रीं क्लीं ग्लौं स्वाहा। ४ ओं श्रीं ह्रीं क्लीं ग्लौं गं स्वाहा। ४ ओं श्रीं ह्रीं क्लीं ग्लौं गं गणपतये स्वाहा। ४ ओं श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वरवरद स्वाहा। ४. ओं श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वरवरद सर्वजनं (मे) स्वाहा। ओं श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वरवरद सर्वजनं मे वशमानय स्वाहा स्वाहा)

मूलेन आज्येन, मोदकेन, पृथुकैः, लाजैः सक्तुभिः इक्षुखण्डेन, नालिकेरखण्डेन, तिलैः कदली फलैः, अन्यैश्च दाडिम - कपित्थादिभिः पायसेन, गुडान्नेन यथाकामं सगुडमध्वाज्यैः, प्रत्येकं ८-१२-२१-१०८ वारं जुहुयात्। पुनराज्येन अन्ते १६ वारं हुत्वा, ओं ह्रीं चोरगणपतये ममानुकूलं प्रयच्छ स्वाहा इति त्रिराज्येन मोदकेन वा जुहुयात्। पूर्णाहुतिः - मूलमन्त्रेण ४० वारं अभिमन्त्र्य, आतून इन्द्र क्षुमन्तम्। चित्रं ग्राभं सङ्गृभाय। महाहस्ती दक्षिणेन इति जुहुयात्।

कुंभेऽग्नौ पुनः पूजा आसनादिमन्त्रपुष्पान्ता। मोदकानपूपानन्यानि भक्ष्याणि फलानि यथाकामं भगवते निवेदयेत्।

ओं प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव। यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम्। स्वाहा। प्रजापतय इदं, न मम। ओं भूः स्वाहा। अग्नय इदं, न मम। ओं भुवः स्वाहा। वायव इदं, न मम। ओं सुवः स्वाहा। सूर्यायेदं न मम। यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यूनमिहाकरम्। अग्निष्टत् स्विष्टकृद् विद्वान् सर्वं स्विष्टं सुहुतं करोतु स्वाहा। अग्नये स्विष्टकृते इदं, न मम। ओं भूर्भुवस्सुवः स्वाहा। प्रजापतय इदं न मम। (प्राणानायम्य) अस्मिन् कर्मणि अविज्ञात प्रायश्चित्तादीनि करिष्ये।

अनाज्ञातं यदाज्ञातं यज्ञस्य क्रियते मिथु । अग्ने तदस्य कल्पय त्वँ हि वेत्थ यथातथम् । स्वाहा । अग्नय इदं, न मम । पुरुषसंमितो यज्ञो यज्ञः पुरुषसंमितः । अग्ने तदस्य कल्पय त्वं हि वेत्थ यथातथम् । स्वाहा । अग्नय इदं न मम । यत्पाकत्रा मनसा दीनदक्षा न । यज्ञस्य मन्वते मर्तासः । अग्नि ष्टद्धोता क्रतुविद् विजानन् । यजिष्ठो देवान् ऋतुशो यजाति । स्वाहा । अग्नय इदं न मम ।

ओं भूः स्वाहा । अग्नय इदं न मम । ओं भुवः स्वाहा । वायव इदं न मम । ओं सुवः स्वाहा । सूर्यायेदं न मम । अस्मिन् होमकर्मणि मध्ये संभावित समस्त मन्त्रलोप तन्त्रलोप द्रव्यलोपादि समस्तदोषप्रायश्चित्तार्थं सर्व- प्रायश्चित्ताहुतिं होष्यामि । ओं भूर्भुवस्सुवस्स्वाहा । प्रजापतय इदं न मम । ओं श्री विष्णवे स्वाहा । विष्णवे परमात्मने इदं न मम । ओं नमो रुद्राय पशुपतये स्वाहा । रुद्राय पशुपतय इदं न मम । (अप उपस्पृश्य) शिष्टमाज्यं मूलेन त्रिरावृत्तेन "सप्त ते अग्ने समिधः सप्त जिह्वाः सप्त ऋषयस्सप्तः धाम प्रियाणि । सप्त होत्रा सप्त धात्वा यजन्ति सप्तयो- नीरापृणस्वा घृतेन स्वाहा । अग्नये सप्तवत इदं न मम । (आज्यपात्रं उत्तरतो निदध्यात् ।)

अदितेऽन्वमंस्थाः । (इति दक्षिणतः प्राचीनं परिषिञ्चति)

अनुमतेऽन्वमंस्थाः । (इति पश्चात् उदीचीनं)

सरस्वतेऽन्वमंस्थाः । (इति उत्तरतः प्राचीनं)

देवसवितः प्रासावीः । (इति समन्तात्)

हृदयादिन्यास दिग्बन्ध - ध्यान - लमित्यादि पूजा पुरःसरं १०८ वारं मूलमन्त्रं जपेत् । मूलेन १२ वारं जप्तेन क्षीरेण अग्निं तर्पयेत्, श्रीमहागणपतिं तर्पयामि इति । श्री महागणपति पार्षदेभ्यो नमः इति बलिं दत्वा, अस्मा त्कुंभात् अग्नेश्च महागणपतिं यथा स्थानं प्रतिष्ठापयामि इति तं हृदयं नयेत् । अग्निं उपतिष्ठते - अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम । अग्नये नमः ।

मन्त्रहीनं क्रियाहीनं भक्तिहीनं हुताशन ।
यद्धुतं तु मया देव परिपूर्णं तदस्तु ते ॥
प्रायश्चित्तान्यशेषाणि तपः कर्मात्मकानि वै ।
यानि तेषामशेषाणां श्रीकृष्णस्मरणं परम् ॥ श्रीकृष्ण कृष्ण कृष्ण ।

कायेन वाचा + समर्पयामि । अनेन होमेन भगवान् सर्वात्मकः श्रीमहागणपतिः प्रीयताम् । ओं तत्सत् । ब्रह्मार्पणमस्तु ।

कुंभजलेन यजमानस्याभिषेकः । मूर्तेस्तु यथा स्थानं निवेशः ।

ஶ்ரீ:

ஶ்ரீ ஆதிசங்கரர் அருளிய

# ஶ்ரீ கணேச பஞ்சரத்னம்

தமிழாக்கம். (ஸம்ஸ்க்ருத மூலம் முதல் பாகம் பக் 248)

இன்புநல்க மோதகத்தை ஏந்தும் கரத்தனை
என்றுமன்ப ருக்குமுத்தி ஈயுமா வுரத்தனை
அன்புசாலும் அழகுமதியை அஞ்செவிக்கொளணியனை
அலகிலாத வுலகையிங்கு பாதுகாக்கும் ஐயனை
தன்னில்வேறு ஐயனில்த னிப்பெருந் தலைவனை
தாக்குமக்க யாசுரன்றன் வலியழித்த தலைவனை
மன்னுமன்பர் துயர்கெடுத்து மாண்பளிக்கும் மன்னனாம்
மாவிநாயகப் பிரானை யான் வணங்கி வாழ்வனே. (1)

"பக்தியோடு பணிகிலாரை அச்சுறுத்தும் பரமனைப்
பரிதியங் குதிப்பதாகப் பரவியொளிரும் பாலனை
சித்திசேர் சுராசுரர்கள் வணங்கியேத்துஞ் சீலனைச்
சீர்பதத்தைப் பணியுநர்தம் அல்லல் தீர்க்கும் செம்மலை
உத்தமச் சுரர்பிரானை உலகுக்கருளும் நிதியனை
ஓங்குமக் கயப்பிரானை உயர்கணத்தின் தலைவனை
அத்தமா பரப்பிரானை அமைதியோங்க என்றுமே
ஆதியாம் பரம்பிரானை வணங்கியங்கடைவனே (2)

அகிலலோக உயிர்களுக்கும் அமைதியின்ப நல்குவான்
ஆனைமுகத் தசுரனுக்கு ஆகுமறன் அருளினான்
அகிலமேவு மேன்மையாளன் ஆனபெருந் தொந்தியான்
ஆனைமுகத் தருளினான் அழிவிலாத அண்ணலான்
நிகிலவருளின் நீர்மையாளன் நீண்ட பொறுமை நல்குவான்
நெறிப்படுத்து மின்பினான் நெடும்புகழின் மல்குவான்
முகிழ் மனத்திலெண்ணுவார்க்கு மூதுணர்வை அருளுவான்
மூத்தவொளியி னோங்குவானை முன்துதித்து வாழ்வனே (3)
பரம ஏழை பங்கனாகிப் பரவுதுன்பம் போக்குவான்
பழமையான வற்றினுள்ளே பழமையாகி மேவுவான்
புரமெரித்த புங்கவனார் போற்றுமுதற் பிள்ளையான்
போற்றுசுரர் பகையசுரர் பயிலகந்தை போக்குவான்
பிரளயப்பயங்கரத்திற் பெரிதுபயன் பண்ணுவான்
போ்தனஞ் சயன்முதலாம் பேரரவப் பூணினான்
விரவுகன்ன மூலமல்கு விரிமதப் பெருக்கினான்
வேதவாதி யானையானை விதிவணங்கி வாழ்வனே. (4)
அந்தமின்றி யொளிருமந்த அழகுதந்த முதல்வனை
அந்தகற்கு மந்தநல்கும் அந்தகனார் புதல்வனை
முந்துமுள்ள முள்ளடங்கா மூதருளின் உருவனை
மூண்டவிடை யூறழிக்கும் முன்னவனை முடிவிலான்
சிந்தனைகொள் யோகியர்தம் சீரிதயத் தெய்தியே
செம்மையருள் வாழ்வுறவே ஓங்குமுதற் சீரினை
உந்துமற்பு தத்தினானை ஒளிருமேக தந்தனை
உள்ளமொன்ற என்றுமே உறவணங்கி வாழ்வனே. (5)
"மாகணேச பஞ்சரத்னம் மன்னுமித் துதிகளை
மனவிருப்பி னோடெவரை மாண்புகொண்டு நாடொறும்
மாகணேச வெம்பிரானை மனத்திலே இருத்தியே
வாழுமதி காலைதன்னில் வாக்கினால் வழுத்தினால்
ஆகநோய்களின்மையும் ஆகுதோஷமின்மையும்
அமைதியான வாழ்வினோடு அருமைமகப் பேற்றையும்
போகமோடு புனித ஆயுள் பொலியுமட்ட சித்தியும்
புண்ணியமா விரைவிலெய்திப்போக்கியத்தி வாழ்வரே

# விநாயகர் புராணம்

அகரமென அறிவாகி உலக மெங்கும்
அமர்ந்தகர உகரமக ரங்கள் தம்மாற்
பகருமொரு முதலாகி வேறு மாகிப்
பலவேறு திருமேனி தரித்துக் கொண்டு
புகரில் பொருள் நான்கினையும் இடர்தீர்ந் தெய்தப்
போற்றுநருக் கறக்கருணை புரிந்தல் லார்க்கு
நிகரில்மறக் கருணைபுரிந் தாண்டு கொள்ளும்
திருமலனைக் கணபதியே நினைத்து வாழ்வோம் (1)

நிருவி கற்பமாய், நிறைந்தஆ னந்தபூ ரணமாய்,
நிருவி காரமாய், நிர்க்குண மாய், அத்து விதமாய்,
நிருவி சேடமாய், நிரஞ்சன மாகி, ஒன்றுலும்
நிருமி தப்படாக் கணேச, நின் நீள்கழல் தொழுதாம். (2)

பிரமமாய் ஒளி யாய், நிரா காரமாய்ப், பெரிதாய்த்
தரணி யாதிதத் துவமெலாங் கடந்ததத் துவமாய்,
வரமெலாந்தரும் வள்ளலாய், ஏகமாய் வதியும்
பரமனாகிய கணேச நின் பதமலர் தொழுதாம். (3)

என்றும் நீங்குருத் திருவுரு வுடையதாய், எங்கும்
ஒன்றி நின்றுணர்ந் திடும் அறி வானந்த உருவாய்த்
துன்றும் யோகியர் தியானிக்கப் படுஞ்சுக மாகிச்
சென்று சேர்தராக் கணேச நின் திருவடி தொழுதாம் (4)

உலக காரண காரண மாய், உயிர்க் குயிராய்,
இலகு ஞானியர் தமை இழந் தெய்துநற் பேருய்ப்,
பலவு மாய்ப்பரப் பிரம்மமாய், பரேசமாய்ப், பரமாய்த்
திலக மாகிய கணேச நின் திருவடி தொழுதாம் (5)

சகல லோகமும் படைத்தளித் தழிக்குந்தற் பரமாய்,
அகில லோகத்தும் புகலிடந் தனக்கிலா, அமைவாய்ப்
புகலு லோகங்கள் அனைத்திற்கும் புகலிடந் தானாம்
பகவனாகிய கணேச நின் பதமலர் தொழுதாம் (6)

உகத்துக் காதியாய்த், தேவருக் காதியாய் உலவாச்
சுகத்துக் காதியாய்ச் சுரர்களுக் கீசராய்ச், சுடரும்
மகத்துக் கீசராய்க், கணங்களுக் கீசராய், மதிப்போர்
அகத்துக் கூடிய கணேச நின் அடியிணை தொழுதாம் (7)

இராச தத்தொழி லாகிய சிருட்டியை இயற்ற
விராவி ராசதத் துருக்கொடு பிரமனாய், மேலாய்ப்
பராவு வித்தைகள் அனைத்திற்கும் பயில் பிறப்பிடமாய்,
ஓராது நின்றருள்கணேச நின் ஒளிர்ப்பதம் தொழுதாம் (8)

சோர்விலாதசாத் துவிகநற் றொழிலெனுந் திதிக்குச்
சார்வ தானதா மதந்தனில் உருவ கொண்டரியாத்
தீர்வி லாப்பகை அசுரரைச் செகுத்திருந் தேவர்க்
கார்வ மேயருள் கணேச நின் அருட்பதந் தொழுதாம் (9)

தாம தத்தொழி லானசங் காரமாற்றுதற்குத்
தோம கற்றுசாத் துவிகத்தில் தோன்றுருத் திரனாய்,
ஏம முற்றிமை யோர்முனி வோரெலாம் இறைஞ்சச்
சேம வைப்பதாங் கணேச நின் சேவடி தொழுதாம் (10)

கிரண பந்தியாற் பயிரையும் கிளர்சுதைப் பெருக்கால்
பரவு தேவர்கள் தம்மையும் மகிழ்வித்துப் பார்ப்பார்க்
கரசனாய், உலகத்து வெப்பறுத்திடுங் திங்கட்
சொருவ மாகிய கணேச நின் துணைவடி தொழுதாம் (11)

ஒளிப்பி ழம்பதாய், யோகவா யுவினுரு வாகி,
விளிப்பில் காலங்கள் தெரிப்பதாய்த் தொழிலெலாம் விளைத்துக்
களிப்ப தாய்ப்பல சத்திய தானசெங் கதிராய்த்
தெளிப்ப நின்றருள் கணேச நின் சேவடி தொழுதாம் (12)

நிரப்பில் தன்மமாய்த் துறக்கமாய் நிறைந்தத்த துவமாய்த்
தரைச் சொரூபமாய், சமுத்திர மாய்த், திசைச் சுரராய்க்,
கரப்பி லாஉல கனைத்துமாய்க் கலந்துநின் றருளும்
பரப்பி ரம்மமாங் கணேச நின் பாதங்கள் தொழுதாம் (13)

## தோத்திராட்டகம்

பந்தமகற்றும் அனந்தகுணப் பரப்பும் எவன்பால் உதிக்குமோ
எந்த உலகும் எவனிடத்தில் ஈண்டியிருந்தது, சுரக்குமோ,
சந்த மறைஆ கமங்கலைகள் அனைத்தும் எவன்பால் தகவருமோ,
அந்த இறையாங் கணபதியை அன்பு கூரத் தொழுகின்றோம். 1

உலகமுழுதும் நீக்கமற ஒன்றாய் நிற்கும் பொருள் எவன், அவ்
வுலகிற் பிறக்கும் விகாரங்கள் உறாத மேலாம் ஒளியாவன்,
உலகம் புரியும் வினைப்பயனை ஊட்டுங் களைகண் எவன், அந்த
உலக முதலைக் கணபதியை உவந்து சரண மடைகின்றோம். 2

இடர்கள் முழுதும் எவனருளால் எரிவீ ழும்பஞ் சென மாயும்,
தொடரும் உயிர்கள் எவனருளால் சுரர்வாழ் பதியும் உறச்செய்யும்
கடவுள் முதலோர்க் கூறின்றிக் கருமம் எவனான் முடிவுறும், அத்
தடவு மருப்புக் கணபதிபொற் சரணஞ் சரண மடைகின்றும். 3

மூர்த்தி யாகித், தலமாகி, முந்நீர் கங்கை முதலான
தீர்த்த மாகி, அறிந்தறியாத் திறத்தி னானும் உயிர்க்குநலம்
ஆர்த்தி, நாளும் அறியாமை அகற்றி அறிவிப் பான் எவன்,அப்
போர்த்த கருணைக் கணபதியை புகழ்ச் சரணமடைகின்றும். 4

செய்யும் வினையின் முதல்யாவன், செய்யப் படுமப் பொருள்யாவன்
ஐயமின்றி உளதாகும் அந்தக் கருமப் பயன்யாவன்,
உய்யும் வினையின் பயன்வினைவின் ஊட்டி விடுப்பான் எவன் அந்தப்
பொய்யில் இறையைக் கணபதியைப் புரிந்து சரணமடைகின்றும்.5

வேதம் அளந்தும் அறிவரிய விகிர்தன் யாவன், விழுத்தகைய
வேத முடிவில் நடம்நவிலும் விமலன் யாவன், விளங்குபர
நாத முடிவில் வீற்றிருக்கும் நாதன் எவன், எண் குணன் எவன், அப்
போத முதலைக் கணபதியைப் புகழ்ந்து சரண மடைகின்றும். 6

மண்ணின் ஓர்ஐங் குணமாகி வதிவான் எவன் நீ ரிடை நான்காய்
நண்ணி அமர்வான் எவன், தீயின் மூன்றாய் நவில்வான் எவன் வளியின்
எண்ணும் இரண்டு குணமாகி இயைவான் எவன், வானிடை ஒன்றாம்
அண்ணல் எவன் அக் கணபதியை அன்பிற் சரணமடைகின்றோம். 7

பாச அறிவிற் பசுஅறிவிற் பற்றற் கரிய பரன்யாவன்,
பாச அறிவும் பசுஅறிவும் பயிலப் பணிக்கு மவன்யாவன்,
பாச அறிவும் பசுஅறிவும் பாற்றி மேலாம் அறிவான
தேசன் எவன் அக் கணபதியைத் திகழச் சரண மடைகின்றும் 8

(இவ்வெட்டுப் பாடல்களை மூன்று நாட்கள் முப்பொழுதும் ஓதினோர் எல்லாப் பேறுகளையும் பெறுவர் ; எட்டு நாட்கள் ஓதினோரும், சதுர்த்தியன்று எட்டு முறை ஓதினோரும் அட்ட மாசித்திகளுடையவர் ; நாள்தோறும் பத்து முறையாக இரண்டு மாதம் ஓதினோர்க்கு அரசர் வசியமாவர். அவ்வாறு இருபத்தொரு முறை ஓதினோர் மக்கட்பேறு, கல்வி, செல்வம் முதலிய எல்லா நலங்களையும் அடைவர் என்று விநாயகப் பெருமான் காசிபர்க்ஷுமுதலியோர்க்கு அருளினமை, விநாயக புராணத்துட் கூறப்பட்டது.

*அதிராவடிகள் அருளிய*

## மூத்த பிள்ளையார் திருமும்மணிக்கோவை

ஒரு நெடுங் கங்கை இருங்குறும் பைம்புகர்
மும்முகச் செந்நுதி நாலிணர் வெண்ணிணக்
குடற்புலவு கமழும் அடற்கழுப் படையவன்
மதலை மாமதந் துவன்றிய கதனுடைக்
கடதடக் கபோலத் தோரிட மருப்பிற்
கரண்டக வுதரத்து முரண்டரு குழவிதன்
சேவடி யுகள மல்ல
தியாவையு மிலமினி யிருநிலத் திடையே (1)

நிலத்துளங்க மேருத் துளங்க நெடுவான்
தலந்துளங்கச் சப்பாணி கொட்டும் - கலந்துளங்கொள்
காமாரி யீன்ற கருங்கைக் கடதடத்து
மாமாரி யீன்ற மணி (2)

மணிசிந்து கங்கைதன் மானக் குருளையை வாளரக்கர்
அணிசிந்த வென்றஎம் ஐயர்க் கிளங்கன்றை அங்கரும்பின்
துணிசிந்த வாய்ப்பெய்த போதகத்தைத் தொடர்ந் தோர்பிறவிப்
பிணிசிந்து கான் முளையைப் பிடித் தோர்க்கில்லை பேதுறலே (3)

பேதுறு தகைய மல்லந் தீதுறச்
செக்கர் குஞ்சிக் கருநிறத் தொக்க
னாப்பண் புக்கவ னிரும் பொறித் தடக்கையு
முரணிய பெருநீதோட்
கொட்ட நாள்வி தேவுதன்
மட்டுகு தெரிய லடிமணந் தனமே (4)

மேய வுருமிடற்றர் வெள்ளெயிற்றர் திண்சேனை
ஓய மணியூச லாடின்றே - பாய
மழைசெவிக்காற் றுந்திய வாளமர்க்கண் எந்தை
தழைசெவிக் காற் றுந்தத் தளர்ந்து (5)

உந்தத் தளரா வளைத்தன முன்னன்மின் னோடைநெற்றிச்
சந்தத் தளரா வொருதனித் தெவ்வன்றன் தாளிரியூர்
விந்தத் தளரா மருங்கிற் கிளிபெற்ற வேழக்கன்றின்
மந்தத் தளரா மலர்ச்சர ணங்கள் வழுத்துமினே (6)

மின்னெடுங் கொண்ட லந்நெடு முழக்கத்
தோவற விளங்கிய துளேக்கைக் கடவுளே
யாமிக வழுத்துவ தேவனோ ! அவனேற்
பிறந்த, திவ்வுலகின் பெரு மூதாதை
யுரந்தரு சிரமரித் தவற்கே ; வரைந்தது,
மேருச் சிமையத்து மீமிசை
வாரிச் செல்வன் மகண்மகன் மொழியே. (7)

மொழியின் மறைமுதலே, முந்நயனத் தேறே
கழியவரும் பொருளே கண்ணே - செழிய
கலாலயனே, எங்கள் கணபதியே, நின்னே
யலாலேயனே, சூழாதென் னன்பு (8)

அன்புத வச்சுற்ற காறழல் கொண்டெயில் மூன்றெரிய
வன்புத வத்துந்தை மாட்டுநின்றுன். மதஞ் சூழ்மருப்பிற்
கன்புத வக்கரத் தாளமிட் டோடிக் கடுநடையிட்
டின்புத வச்செற்று நீயன்று காத்த தியம்புகவே. (9)

கவவுமணிக் கேடகக் கங்கணக் கைவனா
வறைகழ லவுணரொடு பொருத ஞான்றுநின்
புழைக்கர முயிர்த்த வழற்பே ரூதை
வரைநனி கீறி மூரி
யஞ்சேறு புலர்த்து மென்பர்
மஞ்சேறு கயிலே மலேகிழ வோயே. (10)

மலேசூழ்ந் திழிகின்ற மாசுணம் பொற்பாறைத்
தலேசூழ்ந்து தானிணைப்ப தொக்குங் - கலேசூழ்
திரண்டகங்கொள் பேரறிவன் திண்வயிற்றி னும்பர்
கரண்டகங்கொள் காலுயிர்க்குங் கை. (11)

காலது கையது ; கண்ணது தீயது ; கார்மதநீர்
மேலது கீழது நூலது வெற்பது ; பொற்பமைதீம்
பாலது தேனது தானது மென்மொழிப் பாவைமுட்பூண்
வேலது வாளது, நான்மறைக் கின்ற விடுசுடர்க்கே. (12)

சுடர்ப்பிழப்பு தழைத்த அழற்றனி நெடுவேற்
சேய்மூ வுலகமும் வலம்வர வேய
கொன்றையம் படலே துன்றுசடைக் கணிந்த
ஓங்கிருந் தாதையை வளா அய் மாங்கனி
அள்ளற் றீஞ்சுவை யருந்திய
வள்ளற் கிங்கென் மனங்கனிந் திடுமே (13)

இக்கயங்கொண் மூவலயஞ் சூழேழ் - தடவரைகள்
திக்கியங்கள் பேர்ந்தாடச் செங்கீரை - புக்கியங்கு
தேனாட வண்டாடச் செங்கீரை யாடின்றே
வானாடன் பெற்ற வரை. (14)

பெற்றமெல் லோதி சிலம்பின் மகள் ; பெறப் பிச்சுகந்த
மற்றவள் பிச்சன் மயங்கன்முன் னோன்பின் னிணைமைமிகக்
கற்றவனையன் புறங்காட் டிடைநட மாட்டுகந்தோன்
செற்றவெண் டந்தத் தவனம்மை யாட்கொண்டு செய்வதெனே

செய்தரு பொலன்படை மொய்தரு பரூஉக்குருளை
வெள்ளெயிறு பொதிந்த வள்ளுகிர்த் திரள்வாய்ப்
பெருந்திரட் புழைக்கை
மண்முழை வழங்குந் திண்முர ணேற்றின்
பணையடற் பாகன் றனதிணை
நெடும்பொற் சரண மேத்த
இடும்பைப் பௌவ மினிநீந் தலமே ! (16)

அலங்கன் மணிகனக முந்தி யருவி
விலங்கண் மிசையழிவ தொக்கும் - பலங்கனிகள்
உண்டணைந்த கோன்மகுடத் தொண்கடுக்கைத் தாதளைந்து
வண்டணைந்து சோரும் மதம் (17)

மதந்தந்த மென்மொழி மாமலை யாட்டி மடங்கல்கொன்ற
மதந்தந்த முக்க ணரற்குமுன் னீன்றவம் மாமலைபோன்
மதந்தந்த கும்பக் குழவிமந் தாரப்பொன் னாட்டிருந்து
மதந்தந்த செம்மலன் ரேவைய முய்ய வளர்கின்றதே (18)

வளர்தரு கவட்டின் கிளரொளிக் கற்பகப்
பொதும்பர்த் தும்பி யொழிவின் ரேச்சும்
பாரிடைக் குறுநடைத் தோடி
ஞாங்கர் இட்ட மாங்கனி
முழுவதும் விழுங்கிய முனைப்பனைத் தடக்கை
எந்தையல் லதுமற்றியாவுள
சிந்தை செய்யுந் தெய்வதம் நமக்கே (19)

கேளுற் றியான்தளர வொட்டுமே கிம்புரிப்பூண்
வாளுற்ற கேயூர வாளாக்கர் - தோளுற்
றறுத்தெறிந்து கொன்றழித்தே யங்கையங்கண் மீள
இறுத்தெறிந்து கொன்றழித்த ஏறு. (20)

ஏழு தழீஇயஎம் புத்தேள் மருக, எங் குந்தவள
நீறு தழீஇயஎண் தோளவன் செல்வ, வண் டுண்ணநெக்க
ஆறு தழீய கரதலத் தைய, நின்றன்னையல்லால்
வேறு தழீ இத்தொழு மோவணங் காத வியன்சிரமே. (21)

சிரமே, விசும்பு போத வுயரியிரண் டசும்புபொழி யும்மே !
கரமே, வரைத்திரண் முரணிய விரைத்துவி ழும்மே !
புயமே, திசைவிளிம்பு கிழியச் சென்று செறிக் கும்மே !
அடியே, இடுந்தொறும் இவ்வுல கம்பெய ரும்மே !
ஆயினும், அஞ்சுடர்ப் பிழம்பு தழீஇ
நெஞ்சகத் தொடுங்குமோ நெடும்பணைச் சூரே (22)

சூர்தந்த பொற்குவட்டின் சூளிகையின் வானயிர்த்து
வார்தந் தெழுமதியின் மன்னுமே - சீர்தந்த
மாமதலை வான்மதியங் கொம்பு வயிற்றுதித்த
கோமதலை வான்மதியங் கொம்பு (23)

## விநாயகர் நான்மணி மாலை

### மகாகவி சுப்ரமண்ய பாரதியார்

சக்திபெறும் பாவாணர் சாற்றுபொருள் யாதெனினும்
சித்தி பெறச் செய்வாக்கு வல்லமைக்கா - அத்தனே
நின்றனக்குக் காப்புரைப்பார் நின்மீது செய்யுநூல்
இன்றிதற்குங் காப்பு நீயே 1

நீயே சரணநின தருளே சரணஞ் சரணம்
நாயேன் பலபிழை செய்து களைத்துனே நாடிவந்தேன்
வாயே திறவாத மௌனத் திருந்துன் மலரடிக்குத்
தீயே நிகர்த்தொளி வீசுந் தமிழ்க்கவி செய்குவனே. 2

செய்யுந் தொழிலுன் தொழிலேகாண் ; சீர்பெற் றிடநீ யருள்
செய்வாய்,
வையந்தனையும் வெளியினையும் வானத் தையுமுன்
படைத்தவனே !
ஐயா, நான்முகப் பிரமா, யானை முகனே, வாணிதனைக்
கையா லணைத்துக் காப்பவனே, கமலா சனத்துக் கற்பகமே 3

கற்பக விநாயகக் கடவுளே, போற்றி !
சிற்பர மோனத் தேவன் வாழ்க !
வாரண முகத்தான் மலர்த்தாள் வெல்க !

ஆரண முகத்தான் அருட்பதம் வெல்க !
படைப்புக் கிறையவன் பண்ணவர் நாயகன்
இந்திர குருஎன திதயத் தொளிர்வான்
சந்திர மவுலித் தலைவன் மைந்தன்
கணபதி தாளைக் கருத்திடை வைப்போம் ;
குணமதிற் பலவாம் ; கூறக் கேளீர் :
உட்செவி திறக்கும் ; அகக்கண் ஒளிதரும் ;
அக்கினி தோன்றும் ; ஆண்மை வலியுறும் ;

திக்கெலாம் வென்று ஜயக்கொடி நாட்டலாம்
கட்செவி தன்னைக் கையிலே யெடுக்கலாம் ;
விடத்தையும் நோவையும் வெம்பகை யதனையும்
துச்சமென் றெண்ணித் துயரிலா திங்கு
நிச்சலும் வாழ்ந்து நிலைபெற் றோங்கலாம் ;
அச்சந் தீரும் ; அமுதம் விளையும் ;
வித்தை வளரும் ; வேள்வி யோங்கும் ;
அமரத் தன்மையு மெய்தவும்
இங்கு பெறலாம் ; இஃதுணர் வீரே. 4

உணர்வீர், உணர்வீர் உலகத்தீரிங்குப்
புணர்வீர் அமரறும் போகம் - கணபதியைப்
போத வடிவாகப் போற்றிப் பணிந்திடுமின்
காதலுடன் கஞ்சமலர்க்கால் 5

காலைப் பிடித்தேன் கணபதி நின்பதங் கண்ணிலொற்றி
நூலைப் பலபல வாகச் சமைத்து நொடிப்பொழுதும்
வலைத் தவறு நிகழாது நல்ல வினைகள் செய்துன்
கோலை மனமெனு நாட்டினிறுத்தில் குறியெனக்கே. 6

எனக்கு வேண்டும் வரங்களை யிசைப்பேன் கேளாய் கணபதி
மனத்திற் சலனமில்லாமல், மதியிலிருளே தோன்றுமல்,
நினைக்கும் பொழுது நின்மவுன நிலைவந்திட நீ செயல் வேண்டும்
கனக்குஞ் செல்வம் நூறு வய திவையுந் தர நீ கடவாயே. 7

கடமை யாவன தன்னைக் கட்டுதல்,
பிறர்துயர் தீர்த்தல், பிறர்நலம் வேண்டுதல்,
விநாயக தேவனாய், வேலுடைக் குமரனாய்,
நாராயணனாய், நதிச்சடை முடியனாய்,
பிற நாட்டிருப்போர் பெயர்பலகூறி,
அல்லா யெஹோவா எனத்தொழு தன்புறும்

அதவருந் தானாய், திருமகள், பாரதி,
உமையெனுந் தேவிய ருகந்தவான் பொருளாய்,
உலகெலாங் காக்கு மொருவனைப் போற்றுதல்
இந்நான் கேயிப் பூமியிலெவர்க்கும்
கடமையெனப்படும் ; பயனிதில் நான்காம்,
அறம் பொருள் இன்பம், வீடெனு முறையே
தன்னை யாளுஞ் சமர்த்தெனக் கருள்வாய்,
மணக்குள விநாயகா, வான்மறைத் தலைவா
தனைத்தா னாளுந் தன்மைநான் பெற்றிடில்,
எல்லாப் பயன்களுந் தாமே யெய்தும் ;
அசையா நெஞ்ச மருள்வாய்; உயிரெலாம்
இன்புற் றிருக்க வேண்டிநின் னிருதாள்
பணிவதே தொழிலெனக் கொண்டு
கணபதி தேவா, வாழ்வேன் களித்தே. 8

களியுற்று நின்று கடவுளே யிங்குப்
பழியற்று வாழ்ந்திடக்கண் பார்ப்பாய் - ஒளிபெற்றுக்
கல்விபல தேர்ந்து கடமையெலா நன்காற்றித்
தொல்வினைக்கட் டெல்லாம் துறந்து. 9

துறந்தார் திறமை பெரிததினும் பெரிதாகு மிங்குக்
குறைந்தாரைக் காத்தெளி யார்க்குண வீந்து குலமகளும்
அறந்தாங்கு மக்களு நீடூழி வாழ்கென அண்டமெலாம்
சிறந்தாளு நாதனைப் போற்றிடுந் தொண்டர் செயுந் தவமே. 10

தவமே புரியும் வகையறியேன் சலியா துறநெஞ் சறியாது,
சிவமே நாடிப் பொழுதனைத்துந் தியங்கித் தியங்கி நிற்பேனை,
நவமா மணிகள் புனைந்தமுடி நாதா, கருணா லயனே, தத்
துவமா கியதோர் பிரணவமே, அஞ்சேல் என்று சொல்லுதியே.
சொல்லினுக் கரியனாய்ச் சூழ்ச்சிக் கரியனாய்ப்
பல்லுரு வாகிப் படர்ந்தவான் பொருளை,
உள்ளுயி ராகி யுலகங் காக்கும்
சக்தியே தானாந் தனிச்சுடர்ப் பொருளை,
சக்தி குமாரனைச் சந்த்ர மவுலியைப்
பணிந்தவனுருவிலே பாவனை நாட்டி,
ஓமெனும் பொருளை யுளத்திலே நிறுத்தி,
சக்தியைக் காக்குந் தந்திரம் பயின்று,
யார்க்கும் எளியனாய், யார்க்கும் வலியனாய்,
யார்க்கும் அன்பனாய், யார்க்கு மினியனாய்

வாழ்ந்திட விரும்பினேன் ; மனமே ! நீ யிதை
ஆழ்ந்து கருதியாய்ந் தாய்ந்து, பலமுறை
சூழ்ந்து, தெளிந்தபின் சூழ்ந்தார்க் கெல்லாம்
கூறிக் கூறிக் குறைவறத் தேர்ந்து,
தேறித் தேறிநான் சித்திபெற் றிடவே,
நின்னா லியன்ற துணைபுரி வாயேல்,
ரபான்னா லுனக்கொரு கோயில் புனைவேன் ;
மனமே, எனைநீ வாழ்வித் திடுவாய்
வீணே யுழலுதல் வேண்டா,
சக்தி குமாரன சரண்புகழ் வாயே. 12

புகழ்வோங் கணபதிநின் பொற்கழலை நாளுந்
திகழ்வோம் பெருங்கீர்த்தி சேர்ந்தே - இகழ்வோமே
புல்லரக்கப் பாதகரின் பொய்யை யெலாம் ; ஈங்கிதுகாண்
வல்லபைகோன் தந்த வரம். 13

வரமே நமக்கிது கண்டீர் கவலையும் வஞ்சனையும்
கரவும்/புலைமை விருப்பமு மையமுங் காய்ந்தெறிந்து
சிரமிதெங்கள் கணபதி தாண்மலர் சேர்த்தெமக்குத்
தரமேகொல் வானவர்' என்றுளத் தேகளி சார்ந்ததுவே 14

சார்ந்து நிற்பா யெனதுளமே, சலமுங் கரவுஞ் சஞ்சலமும்
பேர்ந்து, பரம சிவாநந்தர் பேற்றை நாடி, நாடோறும்
ஆர்ந்த வேதப் பொருள்காட்டும் ஐயன், சக்தி தலைப்பிள்ளை,
கூர்ந்த விடர்கள் போக்கிடுநங் கோமான் பாதக் குளிர்நிழலே 15

நிழலினும் வெயிலினு நேர்ந்தநற் றுணையாய்த்
தழலினும் புனலினு மபாயந் தவிர்த்து
மண்ணினுங் காற்றினும் வானினு மெனக்குப்
பகைமையொன் றின்றிப் பயந்தவிர்த் தாள்வான்
உள்ளத் தோங்க நோக்குறும் விழியும்
மௌன வாயும் வரந்தரு கையும்
உடையநம் பெருமான் உணர்விலே நிற்பான்
ஓமெனு நிலையி லொளியாகத் திகழ்வான்
வேத முனிவர் விரிவாப் புகழ்ந்த
பிருஹஸ் பதியும் பிரமனும் யாவுந்
தானே யாகிய தனிமுதற் கடவுள்
யானென தற்றார் ஞானமே தானாய்
முக்தி நிலைக்கு மூலவித் தாவான்
ஸத்தெனத் தத்தெனச் சதுர்மறை யாளர்

நித்தமும் போற்று நிர்மலக் கடவுள்
ஏழையர்க் கெல்லா மிரங்கும் பிள்ளை
வாழும் பிள்ளை மணக்குளப் பிள்ளை
வெள்ளாடை தரித்த விட்டடுனுவென்று
செப்பிய மந்திரத் தேவனை
முப்பொழு தேத்திப் பணிவது முறையே. 16

முறையே நடப்பாய் முழுமூட நெஞ்சே,
இறையேனும் வாடா யினிமேல் - கறையுண்ட
கண்டன் மகன்வேத காரணன் சக்திமகன்
தொண்டருக்குண்டு துணை 17

துணையே, யெனதுயி ருள்ளே யிருந்து சுடர்விடுக்கும்
மணியே, யெனதுயிர் மன்னவனே, யென்றன் வாழ்வினுக்கோர்
அணியே, யெனுள்ளத்தி லாரமு தேயென தற்புதமே,
இணையே துனக்குரைப் பேன்கடை வானில் எழுஞ்சுடரே. 18

சுடரே போற்றி, கணத்தேவர் துரையே போற்றி, எனக்கென்றும்
இடரே யின்றிக் காத்திடுவாய், எண்ணா யிரங்கால் முறையிட்டேன்;
படர்வான் வெளியிற் பலகோடி கோடி கோடிப் பல்கோடி
இடரா தோடு மண்டலங்க ளிசைத்தாய், வாழி யிறையவனே 19

இறைவி இறையவ னிரண்டு மொன்றுகித்
தாயாய்த் தந்தையாய் சக்தியும் சிவனுமாய்
உள்ளொளி யாகி யுலகெலாந் திகழும்
பரம் பொருளேயோ ! பரம் பொருளேயோ !
ஆதி மூலமே ! அனைத்தையுங் காக்கும்
தேவ தேவா, சிவனே, கண்ணா,
வேலா, சாத்தா, விநாயகா, மாடா,
இருளா, சூரியா, இந்துவே, சக்தியே,
வாணீ, காளீ, மாமக ளேயோ,
ஆணாய்ப் பெண்ணாய் அலியாய் உள்ள
தியாதுமாய் விளங்கு மியற்கைத் தெய்வமே,
வேதச் சுடரே, மெய்யாங் கடவுளே,
அபயம் அபயம் அபயநான் கேட்டேன்,
நோவு வேண்டேன் நூறுண்டு வேண்டினேன்;
அச்சம் வேண்டேன், அமைதி வேண்டினேன ;
உடைமை வேண்டேன், உன் துணை வேண்டினேன்
வேண்டா தனைத்தையு நீக்கி
வேண்டிய தனைத்தும் அருள்வதுன் கடனே. 20

